सत्यमस्त्युद्देशः सामाजिकरसं प्रति । किन्तु (त)मुत्पादयितुं, न प्रतिपादयितुम् । यदर्थप्रतिपत्तिं प्रत्युद्देशः, स तु वाक्यार्थः ॥

ननु जैमिनेः 'दर्शनस्य परार्थत्वाद्' (अ० १. पा० १. अधि० ६. सू० १८) इत्युच्चारणस्य परप्रतिपत्त्यर्थत्वमेव विवक्षितम् । 'उच्चारणताद(र्थस्या ? र्थ्या)दर्थसिद्धिरि'ति वदतां परितो(वि ? )षादीनामप्येतदेव मतम् । इतरथा ख्यातिलाभपूजादीनामपि शाब्दत्वप्रसङ्गादित्यत आह —

विशिष्टैः शब्दसन्दर्भैर्ज्ञापयेयं रसं यतः ।
इति प्रवृत्ते सुकवौ तेषामुत्पद्यते रसः ॥

ज्ञप्तावुद्देश उत्पत्तिर्हेतु(बालायते ? बलायते)त्यर्थः । उत्पन्नस्य रसस्य स्वयंप्रकाशत्वाद् बुभुत्सि(ति ? त)ग्राह्यत्वाद् वा अन्यथा सिद्धायां (भीव ? ) प्रतिपत्तौ पुरस्तात् त(स्य ? स्या)मेवोद्देशादवर्जनीयसिद्धोत्पत्तिर्वाक्यार्थत्वं न विहन्ति । विपर्ययः किं न स्यादिति चेद्, न । प्रमाणं हि वाक्यं मतमिति तामेवोद्दिशति । तस्मात् तदुपादानास्तत्रैव व्या(हि ? प्रि)यन्ते । अतः सामाजिकगतो रसः प्रतिपाद्यतयोद्देशविषयो नो(पप ? त्पा)द्यतयेति सिद्धम् । किञ्च न वाक्यस्य ज्ञप्त्युत्पत्त्योरेको व्यापारः उद्देश्यमप्येकमिति च । अतो रसकाव्ययोर्भाव्यभावकत्वमपि निर्व्यूढम् । अत्रोक्तमाचार्यैः —

"वाच्या प्रकरणादिभ्यो बुद्धिस्था वा क्रिया यथा ।
वाक्यार्थः (का)रकैर्युक्ता स्थायी भावस्तथेतरैः ॥
रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात् ।
नानुकार्यस्य वृत्तत्वात् काव्यस्यातत्परत्वतः ॥"

इति ॥

वाक्याद् रसप्रतिपत्तौ प्रमाणमाह —

प्रत्यक्षं दृश्यते श्रोतुः प्रबन्धश्रुत्य(न)न्तरम् ।
आनन्दसंविदुद्भूतिलिङ्गं च पुलकादिकम् ॥

वा(क्या)र्थश्चेद् रसः, 'शृङ्गारी गिरिजानन —' इत्यादिभिर्वाक्यैः कथं न प्रतिपाद्यत इत्यत्राह —

तत्तद्रसाविनाभूतविभावादिसमर्पकः ।
विशिष्टो हि कवेर्गुम्फो रसस्य प्रतिपादकः ॥

इति ॥

तत्तद्विभावादिसमर्पकत्वातिरिके गुणगुम्फस्य यो विषयः, तं प्रदर्शयति—

तत्तद्रीतियुतं काव्यं तत्तद्रीतिसमन्वितम्।
तत्तद्रीतिरसं सूते तत्तज्जाति यथोचितम्॥

रीतिसामान्यलक्षणम्—

वैदर्भ्यादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः।
रीङ् गताविति धातोः सा व्युत्पत्तौ रीतिरुच्यते॥

वचनविन्यासक्रमो रीतिरित्यर्थः॥

केषाञ्चिद् रीतेर्विशेषलक्षणमाह—

समा(स)वृत्त्यनुप्रासोपचारोत्कर्षभेदतः।
वैदर्भी रीतिरावन्ती पाञ्चाली गौडिका तथा॥
चतस्रो रीतयो लक्ष्या इति केचन मन्वते।

यदसमस्तमतिसुकुमारबन्धमनुपचारवृत्ति श्रुत्यनुप्रास(योगि) योगवृत्तिमद् वचः, सा वैदर्भी। यदीषत्समस्तमतिसुकुमारब(न्ध? न्धं) नाप्युपचारवृत्ति लाटानुप्रासयोगि योगरूढिमद् वचः, सावन्ती। यदनतिदीर्घसमासमतिस्फुटबन्धमत्युपचारवृत्तिमत्* पादानुप्रासयोगरूढिपरम्परागर्भं वचः, सा गौडीति॥

एतदाक्षिपति—

समासमात्रमेवेष्टं भो(?) काव्यस्य वर्त्मनः।

इति। यदसमस्तमित्यादि प्रत्येकं समुदायाभ्यां लक्षणं भवितुमर्हति। यदि प्रत्येकं

"विलासमसृणोल्लसन्मुसललोलदोःकन्दली-
परस्परपरिस्खलद्वलयनिस्वनोद्दन्तुराः।
हरन्ति कलहुङ्कृतिप्रसभकम्पितोरुस्तन-
त्रुटद्गमकसङ्कुलाः कलमखण्डिनीगीतयः॥"

इत्याद्यनतिस्फुटबन्धलक्ष(ण)म्॥

तत्रासमासा वैदर्भी रीतिः सर्वत्र सम्मता।

यथा—

"विहाय वेश्मानि शुचीनि यस्यां दिवं मघोनः प्रणयेन याताः।
इक्ष्वाकवो नेक्षितुमाद्रियन्ते वीरा विमानानि वितानवन्ति॥"

* अत्र कियांश्चिद् ग्रन्थभागो लुप्तः प्रतिभाति।

असमासेत्यनेनाल्पसमासत्वं विवक्षितम् । त्रिचतुरपदसमासोऽप्येकः सह्यत इति केचित् । उक्तं हि —

"यद्येकान्तरूपाणि यत्रोन्मीलन्ति भूयसा (?) ।
तद्रीतिः प्रत्यभिज्ञानात् तत्तत्संज्ञा भजन्ति ताः ॥"

यथा —

"कथय किमिति बाले! का त्वमित्यालपंस्त्वां
झटिति किल दुकूलस्याञ्चले धारयामि ।
अगमदथ निकेतं क्वाप्यसौ शारयन्ती
नवकुवलयमालामांसलैर्दृष्टिपातैः ॥"

**तत्पाकेनौजसा युक्ता स्यादावन्तीति संज्ञिता ।**

तत्पाकेन वैदर्भीपाकेन । ओजसा समासवत्त्वेन । असमासा अल्पसमासा वा वैदर्भी । तस्याः पाकविशेष एव उत्तरा रीतयः । उक्तं हि —

"अद्यानामाद्या रीतिरम्य विकल्पना ।
उत्तरोत्तमे धत्ते रीतय पुरुषोक्तिषु (?) ॥"

इति । आवन्ती यथा —

"एतानि निस्सहतनोरसमञ्जसानि
शून्यं मनः पिशुनयन्ति पदानि तस्याः ।
एते च मार्गतरवः कथयन्ति ताप-
मालम्बितोज्झितपरिग्लपितैः प्रवालैः ॥"

त्रिचतुरपदसमासा आवन्तीत्यर्थः । तत्पाकेन च पाञ्चाली यथा —

"धीरास्त एव धवलायतलोचनानां
तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥"

यद्वा —

"धात्राभिघातदयितागतजर्जराणां
गण्डस्थलीलुठितकुण्डलताडितानाम् ।
क्षोभस्फुटत्(कटक)कोटिविघट्टितानां
नादोऽभवज्झणझणोन्मुखरो मणीनाम् ॥"

पञ्चषपदसमासा पाञ्चालीत्यर्थः । गौडी तत्पाकतो यथा

"लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धबन्धै-
गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।
खण्डेषूद्दण्डपिण्डीतगरतरलकाः प्रापिरे येन वेला-
मालम्बयोत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥"

यद्वा —

"यस्यावस्कन्दलीलापलितबलपरिस्पन्दखर्वीकृतोर्वी-
संरम्भोत्तम्भनाग्रोन्नमितभरनमत्कन्दरासन्धिरासीत् ।
(शोषा ? शेषो) विस्तारफुल्लस्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्ग-
स्फूर्जत्सन्दोहसन्देहितविकटशिखामण्डलीरत्नषण्डः ॥"

इतरनिराकरणार्थमाह—

एतच्छायानुपातिन्यो लाटमागधिकादयः ।

इति । विदर्भादिषु भवा वैदर्भ्यादय इति कथयन्ति । तन्न साधीयः अन्यत्रापि दृष्टेः । ततः पूर्वाचार्यसंज्ञा ॥

एता विनियुङ्क्ते—

शृङ्गारो भाति वैदर्भ्यां नियतं करुणेऽपि वा ॥
पाञ्चाल्यामपि शोभन्ते वीरहास्याद्भुताः पुनः ।
गौड्यां रौद्रस्तथा वीरः प्रदीप्येत क्वचित् (क्वचित्) ॥
आवन्त्यामितरौ भातः परे साधारणीं विदुः ।

इति ।

पाञ्चालीगौडिकामध्ये यथा रीतिं न मन्वते ॥
तथा वैदर्भपाञ्चाल्योः केचिन्मध्यां न शासति ।
केचिन्मध्यान्नेच्छन्ति समासाल्पबहुत्वतः (?) ॥
भावाभाव(व)दप्येते मन्यन्ते वृत्तियोगिनि ।
गुणोत्कर्षातिरेकेण किमन्यत् सम्भवेदिति ॥
रीतिमेकामपीच्छन्ति न चान्ये भामहादयः ।

गुणोत्कर्षः माधुर्योत्कर्षः अपरत्रौजसः ।

अथ वृत्तिलक्षणं —

**या विकासेऽथ विस्तारे क्षोभविक्षेपयोरपि ।**
**चेतसो वर्तयित्री स्याद् वृत्तिः सापि चतुर्विधा ॥**

**कैशिकी भारती च स्यात् सात्वत्यारभटीति च ।**
**सुकुमारार्थसन्दर्भा कैशिकी तासु कथ्यते ॥**

"शशिरुचिषु दलेषु नागवल्ल्या विचकिलदामनि चन्दने च हृद्ये ।
कुवलयिनि पुराणशीधुपात्रे तरलदृशामपतन् दृशः प्रिये च ॥"

**अर्थस्य सौकुमार्येण केवलं भाति भारती ।**

"उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥"

**अर्थ(स्य ? स्या)सौकुमार्येण केवलं सात्वती स्मृता ॥**

"वन्द्यौ द्वावपि तावनार्यचरितप्राप्तप्रतापोदयौ
भीमो भीमपराक्रमः स च मुनिर्भास्वत्कुठारायुधः ।
एकेनामृतवद् विदार्य करजैः पीतान्यसृञ्जि द्विषा-
मन्येनापि हताहितास्रसरसि स्नातं रुषः शान्तये ॥"

**उभयोर्वैपरीत्येन भवत्यारभटी पुनः ।**

यथा —

"यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥"

**कैशिकी भारतीति द्वे भातः शृङ्गारहास्ययोः ।**
**चकास्ति वीराद्भुतयोः सात्वत्यारभटी पुनः ॥**
**रौद्रादिषु प्रदीप्येत करुणे नेति केचन ।**

'वृत्तिः सर्वत्र भारती'त्यर्थवृत्तिपरम् उक्तं हि —

"तद्वदर्थानुसन्धिन्यो द्रष्टव्या वृत्तयः परा: ।
नेतृचेष्टात्मिका वृत्तिश्चतुर्धा तत्र कैशिकी ॥
गीतिनृत्तविलासाद्यैर्मृदुः शृङ्गारचेष्टितैः ।
नर्मतत्स्फञ्जतत्स्फोटतद्गर्भैश्चतुरङ्गिका ॥
विशोका सात्वती सत्त्वशौर्यत्यागजयार्जवैः ।
सल्लापोत्थापकावस्यां साङ्घात्यः परिवर्तकः ॥
क्रोधेन्द्रजालसङ्ग्रामप्रायैरारभटी मता ।
संक्षिप्तिका स्यात् सम्फेटो वस्तूत्थानावपातने ॥

भारती संस्कृतप्राय*

बिता यथा—"एसो एसो वज्जणिद्दारुणचपेडामोडिअखताणेअणरतुरअमतंगळुग्गारभरिअगळगुहागम्भीरगग्गुरुताळगुळ्ळूरणसद्दसदब्भपडिरवाभोअभीसणो विणट्ठणिद्दाविदासेसजणणिवहो दुट्ठसद्दूळो कअंतलीळाइदं करेदि" इति ॥

आविद्धवाक्ये मध्या यथा — "यस्य च मदकलकरिकुम्भपीठपाटनमाचरतो लग्नस्थूलमुक्ताफलप्रकरेण दृढमुष्टिनिष्पीडननिष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव कृपाणेनाकृष्यमाणा सुभटोरःकवाटपुटघटितकवचसहस्रान्धकारमध्यवर्तिनी करिकरटगलितमदजलासारदुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम राजलक्ष्मीः ॥"

एतानि विनियुङ्क्ते—

मध्यायामतिदीप्येत शृङ्गारो हास्य एव वा ।
वीररौद्रौ द्रुतायां स्तः करुणस्पृग् विलम्बितम् ॥
मिश्रां परे भजेते द्वाविति प्रायेण दृश्यते ।
आर्यादयो यथान्यायं संस्कृतेन तु गुम्फिताः ॥
ता एव गाथा भाषाभिरन्याभिः परिकल्पिताः ।
यथादेशं सन्निबद्धा द्विपदी(द्वि? त्रि)पदादयः ॥
शृङ्गारहास्यकरुणवीराद्भुतसमन्विताः ।
पुष्णन्ति महतीं शोभामिति प्रायः कवेरिति ॥

* पत्रमेकमत्र मातृकायां लुप्तम

यथा — "बीबाहरितणरअणपणकिहळेसरिआणंदुअमरअरसंविअपाविअ उसेसह दिण्णुवमुद्दलकेरावणगेरखेळादिरेपुचामोजअळाच्चिद्दहत्थेघेरूण" (?) इत्यादयः । अर्थौचित्येनापि गतिनियम उक्तः —

"कश्चिद् गद्येन पद्येन कश्चिन्मिश्रेण शक्यते ।
कवितुं कश्चन द्वाभ्यां काव्येऽर्थः कश्चन त्रिभिः ॥"

अथ जातिलक्षणं

**सा जातिरिति कथ्येत सन्दर्भो यत्र जायते ।**
**सैषा (च) प्रथिता लोके (न ?) संस्कृतप्राकृतादिका ॥**
**शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ।**
**नोच्यतेऽन्यत्र सिद्धत्वाद् भाषाणां लक्षणं मया ॥**

आदिशब्देनापभ्रंशः । तत्र संस्कृतं त्रिधा — श्रौतमार्षं लौकिकं च । श्रौतं द्विधा — मन्त्रं ब्राह्मणं च । आर्षं द्विधा — स्मृतिः पुराणं च । लौकिकं द्विधा — काव्यं शास्त्रं च । प्राकृतं त्रिधा — सहजं लक्षितं श्लिष्टं च । सहजं द्विधा — संस्कृतसमं देश्यं च । लक्षितं द्विधा — माहाराष्ट्रं शौरसेनं च । श्लिष्टं द्विधा — पैशाचं मागधं च । अपभ्रंशश्च त्रिधा — उत्तमो मध्यमः कनिष्ठश्च । आवन्त्यालाटीयादिरुत्तमः । आभिरगूर्जरादिर्मध्यमः । काश्मीरपौरस्त्यादिः कनिष्ठः ॥

**शुद्धा साधारणी मिश्रा सङ्कीर्णानन्यगामिनी ।**
**अपभ्रष्टेति सा चे(यं) जातिः षोढा निगद्यते ॥**

तासूत्तमपात्रप्रयोज्या संस्कृतजातिः शुद्धा यथा — "उन्नमितैकभ्रूलतमि"त्यादि ।

मध्यमपात्रप्रयोज्या महाराष्ट्रप्राकृतजातिः शुद्धा यथा — "तुज्झ ण आणे हिअअमि"त्यादि ।

नातिमध्यमपात्रप्रयोज्या शौरसेनी शुद्धा यथा — "तुंसि मए चूअङ्कुरे"-यादि ।

[illegible]त्युत्तमपात्रप्रयोज्या पैशाची शुद्धा यथा — "पणमथ पणअपकुपिते"त्यादि ।

[illegible]ीनपात्रप्रयोज्या मागधिका शुद्धा यथा — "शदमाणुशमंशभाअणे"त्यादि ।

नातिहीनपात्रप्रयोज्या लाटीयापभ्रंशजातिः शुद्धा यथा —

"दिविदग्गअकगुरुस्पघाटिअढलिढळपटघिगरुअसणतरुतुणणतसअळजळरासिपवणविरिथरगरुघरहहितितिढडिदाडिकडक्कमळकठिणुकसमसइसेसु-

ळपळइसळक्कजअचंदपआणउपप्परसिअअढपबं हदुविसड्ढिटिहइहमाचळि-मचळिममचळिअमहइपळट्टिहिहइ ।
गूर्जरापभ्रंशजातिर्यथा —
सदसदखफणकनकतरलभनकततकरभटरकजततकरभटरकजततरळभ-नक"
साधारण्यादयः पुनरनन्ताः । मध्यमपात्रभूमिकास्थोत्तमपात्रप्रयोज्या संस्कृतप्राकृतयोः साधारणो यथा —
"सरळे! साहसरागं परिहर रम्भोरु! मुञ्च संरम्भम् ।
विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥"
वक्तृविषयौचित्यादिप्रयोज्या मिश्रा यथा—
"जयति जनताभिवाञ्छितफलप्रदः कल्पपादपो गिरिशः ।
जअइ अ तमळ्ळअंती गिरितणआ पणअकप्पळआ ॥"
दुर्विदग्धादिपात्रप्रयोज्या संकीर्णा यथा —
"अकटमकुटीचन्द्रज्योत्स्नाकळंकिअकोइळो
इ अळअ मुहुर्याम्यो वायुर्निवारअवाइदा ।
अइ सखि! वळा रक्ताशोकस्तवापि मनोमुदे
नकजनकजं मानेनाद्य प्रियं प्रति जाहुदा ॥"
"अहमरुहुकुडे को अ संच खुचाग्गि इचटिमा
दिश अळविळेशाशे आणी शशी णहळा तदो ।
अडडिमळसीहल्लाएण साहु मुखा कति
भ्रमति न सामेवं चित्रं वचेहरत प्रियात् (?) ॥"
विदग्धनागरकादिप्रयोज्या सङ्कीर्णा यथा —
"कदा कटाक्ष एणाक्ष्या पूतुरे नूतनौ स्तनौ ।
वापुरेवापुर्षिकान्तिररेरदलविः (?) ॥"
यद्वा —
"अररे कटाक्षलहरी वपुर्भ्रुवस्थिनटनपाण्डित्य ।
अकटरदरहसितमस्यामुनिजनमप्याकुलीकुरुते (?) ॥"
क्रीडागोष्ठीविनोदार्थानन्यगामिसाधारणी यथा —
"भिष्मप्रोक्तानि वाक्यानि विद्वद्वक्त्रेषु शेरते ।
गोसे तिविञ्छिरिच्छोळी तळ्ळतूहे विवळ्ळिदा ॥"

ग्राम्यपात्रप्रयोजिताषभ्रष्टा यथा —

"चन्द्रितो येन माम्भिरङ्के स्त्रिन्दूरतिष्ठामृदवो यु पुष्णो ।
पुष्पोग्रगर्थो नच गम्यप्राणाः किं कुभिजन्मान्द्रफलानुहोमि (?) ॥"

अनुकरणे साधुत्वमस्य । पात्रानु(सृ)तो रसः पोष्यते । पुरु(ष)पात्रेषु प्रायेण संस्कृतं, सुखोच्चारत्वात् । स्त्रीपात्रेषु प्रायः प्राकृतम् । उक्तं हि —

"अनल्पार्थः सुखोच्चारः शब्दः साहित्यजीवितम् ।
स च प्राकृतमेवेति मतं सूक्तानुवर्तिनाम् ॥"

एवं कथयन्त्याचार्याः —

"संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन ।
अपभ्रंशेन केऽप्याहुर्यथामति यथारुचि ॥
न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् ।
सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः ।
पैशाचाद्यं पिशाचाद्याः मागधं हीनजातयः ।
शृण्वन्ति लटहं लाटाः प्राकृतं संस्कृतद्विषः ॥
अपभ्रंशेन तुष्यन्ति स्वेन नान्येन गूर्जराः ।
केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः ॥
काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः ।
असंस्कृते च तुष्यन्ति कवयो गौडवासिनः ॥"

इति । गौडाः संस्कृतप्रिया इति धनदत्तेनाप्युक्तं —

"ब्रह्मन्! विज्ञापयामि त्वां स्वाधिकारजिहासया ।
गौडस्त्यजतु वा गाथामन्या वास्तु सरस्वती ॥
इति गौडा उपालब्धाः कथिताः संस्कृतप्रियाः ।"

अर्थौचित्यं जातेर्नियामकम् । उक्तं हि —

"संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः ।
शक्यो रचयितुं कश्चिदपभ्रंशेन जायते ॥
पैशाच्या शौरसेन्यान्यो मागध्यान्यो निगद्यते ।
द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥"

क्वचित् सा(मा)जिकौचित्यमपि उक्तं —

"नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया ।
कथा गोष्ठीषु कथयंल्लोके बहुमतो भवेत् ॥
यथामति यथायुक्ति यथौचित्यं यथारुचि ।
कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते ॥"

(श्ला)घ्यं वै कर्म काव्यस्य रीत्यादित्रय उच्यते ।
वि(शि)ष्टे जातिरुच्येत ब्राह्मणत्वादिजातिवत् ॥
अलङ्कारितया केचिदाहुरेताः स्फुरद्भिदाः ।
प्रतीतोन्मेषविन्यासक्रमरूपाः प्रवृत्तयः ॥
किमिस्त्वलङ्कारतया नोच्यन्त इति चोच्यताम् ।
एताः स्युर्यद्य(था ?)लङ्कारो लोकेनायमलङ्कृतिः ॥

पूर्वोक्तमर्थं प्रकटयति —

एवं व्यवस्थितैर्वाक्यैर्विभावादिसमर्पकैः ।
भवेच्चित्तविकासादि ततस्तद्रसोद्भवः ॥
पिष्टखण्डघृतादीनामग्निपाकेन मेलनात् ।
य(त्त ? द्व)त् स्वादुरसोद्भूतिस्त(त्त ? द्व)त् काव्ये रसोदयः ॥
साहित्याभ्यासनिष्णातचेतसां स प्रकाशते ।
शास्त्राभ्याससहायानां रत्नतत्त्वमिव स्फुटम् ॥

इति ॥

अत्र किञ्चिद्विशेषमाह —

प्रकामं रञ्जयेच्चित्तमनेकरससङ्करः ।
यथा मदावि(ला ? लो)लानां कान्तानां किलकिञ्चितम् ॥
संसर्गः सन्निपातश्चेत्येवं द्वैविध्यमाश्रितः ।
द्वाभ्यां प्रथमो द्वाभ्यां द्वितीयो बहुभिर्भवेत् ॥
अत्र मुख्यो भवेदेको रसो वाक्यार्थरूपतः ।

यथा निष्ठाने द्वयोर्बहूनां वा सद्भावे एकस्यैवोल्बणत्वं, तथा काव्य-वाक्येष्वपि कस्यचिदेव प्राधान्यम् । अन्यथा वाक्यभेदप्रसङ्गादिति निर्णयः ।

शृङ्गारवीरसंसर्गो यथा —

"एक्कत्तो रुअइ पिआ अण्णत्तो समरतूरणिग्घोसो ।
णेहेण रएण अ भटस्स अंदोळए हिअअं ॥"

(अ)त्र भटस्येति समाख्यया शृङ्गारस्य प्राधान्यं सूचितम् । यद्वा —"कपोले जानक्या—" इति वीरानुभावस्य सन्नाहरूपस्य जटाबन्धदृढीकरणस्याप्यत्राभिधानाद् वीरस्य प्राधान्यम् ।

अत्रैव शृङ्गारप्राधान्यं यथा —

"अळअं जणंति दकहकत्थरस्सराहचसरासरीरजीवि ।
अंजणअआथणअप्पं सम अं अहकरलाविद्धा (?) ॥"

यद्वा —

"पाणसमो त्ति भणंतो दअइतिळओ उदो मेग्ग इमादिम्म ।
हिअअप्पाणे तण्णं पमण्णइ अहं वि ए आरिसी तस्स ॥"

शृङ्गारकरुणयोः शृङ्गारप्राधान्यं यथा —

"णिअए वि कुग्गअंणे दहपअणो राहचंचरत ।
गुजनि अअद्वि अजणअ सुयामा पापसंगमसुहेति ॥"

शृङ्गारहास्ययोर्हास्यप्राधान्यं यथा —

"घरणिए महाणसकम्मळग्गमसिमइळ्ळिएण हत्थेण ।
छित्तं मुहं हसिज्जइ चंदावट्ठं गअं बइणा ॥"

शृङ्गारप्राधान्यं यथा —

"तिमिरनिरुद्धभीमरजनीमुखचन्द्रिकया
पशुपतिताण्डवाभिनयदर्शनदीपिकया ।
अभिभवसि त्वमपशशिनः श्रियमुज्ज्वलया
दशनमयूखमञ्जरितया हसितप्रभया ॥"

शृङ्गाराद्भुतयोरद्भुतप्राधान्यं यथा —

कमलमनम्भसि कमले च कुवलयमेतानि कनकलतिकायाम्
"सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥"

अत्र शृङ्गारप्राधान्यं यथा —

"एकेनालिङ्गन्तं कृष्णं दोष्णा परेण धृतशैलम् ।
पश्यन्त्या राधाया विस्मयमाक्रम्य वर्तते मानः ॥"

शृङ्गाररौद्रयोः शृङ्गारप्राधान्यं यथा —

"भयात् समालिङ्ग्य निमीलिताक्षीं श्रियं स्ववक्षःपुलकैरुदग्रैः ।
हरिः समाश्वासयदुग्रकर्मा हिरण्यसंहारविधौ नृसिंहः ॥"

रौद्रप्राधान्यं यथा —

"प्रियां भयव्याकुलतारलोचनां विलोकयन् सस्पृहमात्तवेपथुः ।
पुरा हिरण्यासुरघातसम्भ्रमान्न व्यरंसीन्नरकेसरी हरिः ॥"

शृङ्गारभयानकयोः शृङ्गारप्राधान्यं यथा—

"कल्याणदायि भवतोऽस्तु कपालपाणेः
पाणिग्रहे भुजगकङ्कण(भू ? भी)षितायाः ।
सम्भ्रान्तदृष्टि सहसैव नमः शिवाय-
त्यर्धोक्तिलज्जि++मुखमम्बिकायाः ॥"

भयानकप्राधान्यं यथा —

"अपेतव्याहारं धुतविविधशिल्पव्यतिकरं
करस्पर्शारम्भप्रगलितदुकूलान्तशयनम् ।
(ब ? मु)हुर्बद्धोत्कम्पं दिशि दिशि मुहुः प्रेरितदृशो-
रहल्यासुत्राम्णोः क्षणिकमिह रम्यं रतमभूत् ॥"

शृङ्गारबीभत्सयोः शृङ्गारप्राधान्यं यथा — "अन्त्रैः कल्पितमङ्गले"त्यादि ।

बीभत्सप्राधान्यं यथा —

"राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥"

अत्र बीभत्सो रसः श्लेषरूपकसामर्थ्यादविद्यमाने(ना)पि शृङ्गारेण सङ्कीर्ण इव प्रतीयते ।

"पद्भ्यामूरुयुगं विभज्य भुजयोर्मध्यं निपीड्योरसा
पार्श्वेषु प्रसभं प्रहृत्य नखरैर्दन्तैर्विलूयाधरम् ।
सुप्तानप्यवबोध्य युष्मदहितान् भूयोऽपि भुङ्क्ते वने
किं कान्ता सुरतैषिणी नहि नहि व्याघ्री करालानना ॥"

अत्र श्लेषसामर्थ्यादपारमार्थिकः शृङ्गारः पारमार्थिकेन बीभत्सरसेन संसृज्यते ।

शृङ्गारकरुणयोः करुणप्राधान्यं यथा —

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिगलितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥"

अत्र करुणरसः श्लेषोपमानसामर्थ्यादविद्यमाने(ना)पि विप्रलम्भशृङ्गारेण संसृज्यते । यद्वा —

"राज्याद् भ्रंशो वने वासः सीता नष्टा हतो द्विजः ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥"

अत्र कतरः शृङ्गारः, विप्रलम्भः । कतमः, प्रवासः । किमत्र सीता(या दे)-शान्तरगमनं निर्णीतं, निरणायि हि रामेण जटायुर्निवेदितवृत्तान्तेन । कस्तर्हि, तत्र यत्र देशान्तरलोकान्तरगमनयोः सकरं (?) निश्चितम् । यथा मालतीमाधवे नवमेऽङ्के— 'हा प्रिये! क्वासि कथमविज्ञाततत्त्वमद्भुततमं च झटित्यपक्रान्तासी'त्यादि । यद्वा विक्रमोर्वशीये चतुर्थेऽङ्के— 'कुतो नु खलु निर्जने वने प्रियाप्रवृत्तिरागमितव्ये'त्यादि । पूर्वस्मिन्नुदाहरणे मालत्या देशान्तरगमने क .... त्वमस्मिन्नपरस्मिन् वासन्तिकालताभावेन परिणताया उर्वश्याः प्रायो लोकान्तरगमनमेव । नायकस्य परमुभयोः सन्देह उच्यते । संशये करुणः, वल्लभस्य भृशं दुःखायमानत्वात् । सर्वत्रानर्थशङ्कीनि बन्धुहृदयानि भवन्ति । तत्र प्रदेशे लेशतो भवन् देशान्तरगमनसम्भावनाभासो नात्यन्तं कार्यकरः । अत एव हि तत्र तत्र मूर्च्छामूर्च्छादयः सहसा शन्धमवधूय प्रभवति । प्रभावन्यासस्या(?)-लेशेन सम्भवात् तत्प्राप्त्युपायभूता गवेषणादयोऽप्युपपद्यन्ते । अपिच तत्त्वं यद्वातद्वास्तु, बुद्धिरेव रसनिर्वाहिका । ते (हनि ? न हि) सत्यममृतायामपि वासवदत्तायां वत्सराजस्य मृतेति बुद्धौ शृङ्गारः करुणः समपद्यत । तथाहि — 'मृतेति प्रेत्य सङ्गन्तुमि'त्यादि करुणानन्तरस्योदाहरणमजनि । एवं मदालसायामपि कुवलयाश्वस्य । तस्मान्माधवादिबुद्धेस्तत्तदेकान्तरूपप्राचुर्योपस्थापितमरणैककोट्यवलम्बनप्रवणानवधारणात्मिका बुद्धिरूहो वितर्कपर्यायः कदाचित् तत्त्वानुरूपादिति भवतीति कथं पुरस्तात् संशये करुण इत्यभाणि । तन्न । अनवधारणत्वाद् विशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभव इति । एवमन्यत्रापि द्रष्टव्यम् ।

भयानककरुणाद्भुतरौद्रशृङ्गारसन्निपातो यथा —

''राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम्।
आतङ्काद् विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते॥''

अत्र शृङ्गारस्य प्राधान्यम्। एवमन्येषामपि सन्निपातो यथाप्रयोगं द्रष्टव्यः।

**रसाः स्युः सूक्तिवैचित्र्यादतिशायनशालिनः।**
**ऋजूक्तिरथ वक्रोक्तिरिति द्वेधा हि सूक्तयः॥**
**रसोक्तिमपि केऽप्या(हु) रसस्यैवातिदीपनात्।**
**यस्यां यादृगवस्थायां यद् रूपं यस्य वस्तुनः॥**
**तत् तथैवावयन्त्युक्तिः स्यादृज्वी ग्राम्यवर्जिता।**
**एषैव जातिरुच्येत प्राज्ञैः साहित्यवेदिभिः॥**

यथा—

''दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रे प्रेषयति प्रवर्तितसखीसम्भोगवार्तास्वपि।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग् यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः॥''

यद्वा—

''पादावष्टम्भनम्रीकृतमहिषतनोरुल्लसद्बाहुमूलं
शूलं प्रोल्लासयन्त्याः सललितवपुषो मध्यभागस्य चण्ड्याः।
विश्लिष्टस्पष्टदृष्टोन्नतविरलवलिव्यक्तगौरान्तराला-
स्तिस्रो वः पान्तु रेखाः क्रमवशविगलत्कञ्चुकप्रान्तमुक्ताः॥''

**अर्थव्यक्तेरियं भेदमियतैव प्रपद्यते।**
**जायमानमियं वक्ति रूपं सा सार्वकालिकम्॥**
**प्रसिद्धा तत्र वक्रोक्तिः + स्यादृजुविपर्ययात्।**
**अनयैव हि काव्यानि भिद्यन्ते काव्यवर्त्मनः॥**
**स्वभावोक्तिरपि प्रायः स्यात् समाधिमती यदि।**
**वक्रामाहुरिमां केचिद् रसस्यैवामृता(प ? य)नम्॥**

यथा —

"स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतीनामाबन्धः किसलयितलीलापरिमलः
स्पृशन्त्यास्तारुण्यं किमिव नहि रम्यं मृगदृशः ॥"

अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः ।
अलङ्कार्यतया तेषां किमन्यदवशिष्यते ॥

कुतस्तद्रहितं स्याच्चेन्निरुपाख्यं प्रसज्यते ।
शरीरं चेदलङ्कारः किमलङ्कुरुते परम् ॥

नात्मनैवात्मनः स्कन्धं क्वचिदप्यधिरोहति ।
भूषणत्वे स्वभावस्य विहिते भूषणान्तरे ॥

भेदावबोधः प्रकटस्तयोरप्रकटोऽथवा ।
स्पष्टे सर्वत्र संसृष्टिरस्पष्टे सङ्करस्ततः ॥

अलङ्कारान्तराणां च विषयो नावशिष्यते ।
अथातिशयसंसृष्टमीलिताङ्गावगर्भिणी ॥

सूक्ष्मा भाविकसंश्लिष्टा समासोक्तिप्रकारिणी ।
समाधिगर्भा साक्षेपाप्रस्तुता सहभाषिणी ॥

सं(श्लेषा ? लेशा)र्थान्तराश्लिष्टा गुर्वी लघ्वी समा पुनः
घटिता शृङ्खला सूच्या छायापवृतिरेव च ॥

प्रथन्ते कविवाक्येषु वक्रा विंशतिरुक्तयः ।
विवक्षया विशेषस्य लोकसीमातिवर्तिनी ॥

असावतिशयोक्तिः स्यादेषा वक्रोक्तिजीवितम् ।
सा च प्रायो गुणानां वा क्रियाणां वोपकल्प्यते ॥

नहि द्रव्यस्य जातेर्वा भवत्यतिशयः क्वचित् ।

यथा —

"विमळिअरसाअळेण विविसहरपइणा अदिट्ठमूळच्चेअं ।
अप्पत्ततुङ्गसिहरं तिभुवणहरणपरिवड्ढिएण वि हरिणा ॥"

यद्वा —

"मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिका ॥"

**वस्त्वन्तरतिरस्कारो वस्तुना मीलितेष्यते ।**

यथा —

"एत्तो वि ण सच्चविओ (जगदे ? गोसे) पसरत्तपल्लवारुणराओ ।
म(श्चे ? जणतंबेसु मओ तह मअतंबे)सु लोअणेसु अमरिसो ॥"

यद्वा —

"पिअदंसणसुहरसमुउलिआइ जइ से ण होन्ति णअणाइ ।
ता केण कण्णलग्गं लक्खिज्जइ कुवलअं तिस्सा ॥"

**(तत्तत्ता)त्पर्यभेदेन मीलितातिशयार्थयोः ।**
**तत्र तत्र प्रयोगेषु व्यक्तं भेदोऽवगम्यते ॥**

**अभिप्रायानुकूल्यात् (तु) प्रवृत्तिगणनं हि यत् ।**
**साङ्गावगर्भिताभेदो नापिकोक्तेः प्रवृत्तिः ( ? ) ॥**

यथा —

"हत्थि पुहेण हि शुद्धं पिअसअपअअणा पशुस्सओ ।
पेशुघ पेशुघरिणी सुअपडमुग्गिण्णदित्त दुअळं अव्वोरी (?) ॥"

यद्वा —

"साळोअ च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण ।
णेच्छंतस्स वि पाए धुअइ हसंती हसंतस्स ॥"

**सेनापाया निरुद्भेदा सोऽवमूक्ष्मेति कथ्यते ।**
**इङ्गिताकारलक्षा स्यात् सा भ्रमिकान्तरम् ( ? ) ॥**

(पथु ? यथा) —

"कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमा ।
अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥"

**पद्मसम्मीलनाच्चात्र दर्शितो निशि सङ्गमः ।**
**आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥**

**साभिप्रायोक्तिविन्यासः प्राज्ञैर्ज्ञेया सभाविका ।**

यथा —

"दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मिन् गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्ति जठरच्छेदां नलग्रन्थयः॥"

यद्वा —

"शुभे! कोऽयं वृद्धो गृहपरिवृढः किं तव पिता
न मे भर्ता रात्रौ व्यपगतदृगन्यच्च बधिरः।
हु हुं हुं श्रान्तोऽहं शिशयिषुरिहैवापवरके
क्व यामिन्यां यासि स्वपिहि ननु निर्दंशमशके॥"

यद्वा —

"व्याधाः पापधियस्तथापि भवते वीराय कस्तिष्ठते
किन्तु त्वामभिरूपमद्रिनिलयाः पश्यन्तु मां देवताः।
याहि प्रातरतीत्य पाण्डुरजनीं गण्डीभटस्य स्वसा
स्वप्तुं वेश्मनि खड्गचर्मखचितां खट्वामियं दास्यति॥"

**यत्रोपमानादेवैतदुपमेयं प्रतीयते।**
**अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः॥**
**उपमेयस्यावचनादुपमाया विदुर्जिता (?)।**

यथा —

"नीलेन्दीवरमिन्दुकान्तिरमृतस्यन्दो नवः कन्दलः
कुन्दान्यस्फुटितानि मन्दपवनः कन्दर्पलीलाधनुः।
प्रत्येकं हृदयङ्गमानि सकलान्येतानि तन्व्या मुखे
यस्मिन् सन्निहितानि तच्च वदनं किं वान्यदप्याननम्॥"

यद्वा —

"आम बहळा वनाळी मुहळा जळरंकुणो जळं सिसिरं।
अण्णाणईण वि रेवाए तह वि अण्णे गुणा के वि॥"

**समाधिगम्यां तामाहुर्वस्तुनो नान्यथाकृतिः।**

यथा —

"चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा
बादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित्।

एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥"

यद्वा —

"भानुमानपरदिग्वनितायाश्चुम्बति स्म (भृश ? मुख)मुल्बणरागः ।
पद्मिनी किमु करोतु वराकी मीलिताम्बुरुहनेत्रपुटासीत् ॥"

"सहकारयुवा समीपगां फलिनीं वेपितपल्लवाधराम् ।
कुपितामिव कोकिलाधरैः सरसं सान्त्वयितुं प्रचक्रमे ॥"

**(सा)क्षेपा प्रतिषेधोक्तिर्येनकेनापि वर्त्मना ।**

यथा —

"कुतः कुवलयं कर्णे करोषि कलभाषिणि! ।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥"

यद्वा — 'गच्छ गच्छसि चेत् कान्ते'त्यादि ।

**अप्रस्तुतप्रशंसा स्यादन्त्ये तु व्यङ्ग्यया स्तुतिः ।**

यथा — 'शिखरिणि ! क्वनु नामे'त्यादि ॥

**कर्त्रादीनां क्रियावेशः सहान्यैः सदृशेतरैः ।**
**सदृशैर्वा क्वचिद् यत्र सहोक्तिं तां प्रचक्षते ॥**

यथा —

"वर्धते सह पान्थानां मूर्छया चूतमञ्जरी ।
वहन्ति स्म समं तेषामश्रुभिर्मलयानिलाः ॥"

यद्वा—

"धीरेण समं जामा हिअएण समं अणिट्ठिआ उवए(सा) ।
उच्छाहेण सहभुवा आहेण समं गळन्ति से उल्लावा ॥"

**दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः ।**
**सा लेशोक्तिस्तथा नान्या व्याजस्तुतिरपीष्यते ॥**

"अथैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥"

"प्रियोऽसि प्राज्ञोऽसि प्रभुरसि कुलीनोऽप्यसि युवा
युवत्यस्त्वामेवं कति न पतिमुर्वीश ! वृणते ।

अतश्चैनां कीर्त्तिं नलनहुषमान्धातृमहिषीं
परामष्टुं वृद्धामधिगतनयो नार्हति भवान् ॥"

**जायेतार्थान्तरोक्तिः सा वस्तु प्रस्तुत्य किञ्चन ।**
**तत्साधनसमर्थस्य न्यासो योग्यस्य वस्तुनः ॥**

यथा —

"जो जस्स हिअअदइओ दुःखं देन्तो विसो सुहं देइ ।
दइअणहदूणिआण वि वड्ढइ थणआण रोमञ्चो ॥"

यद्वा — "ते विरळा सप्पुरुसा" इत्यादि ।

**यत्संक्षिप्ताभिधानं गुर्वी लघ्वी विपर्ययः ।**
**समाभिधाना स्यात् त्रिधा कविविवक्षया (?) ॥**

वीप्सैकशेषसंज्ञासमासादिभिः संक्षिप्ताभिधानं यद्विपर्ययाद् विपर्ययः ।

**गुर्वी यथा** —

"पश्यामि तां तत इतः परितश्च पश्चा-
दन्तर्बहिः पुरत एव च वर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीं
व्यासज्ञतिर्यगपवर्जितदृष्टि वक्रम् ॥"

**लघ्वी यथा**

"जिजीपुउएमिदिसपुरळलि एहि एप्प पदी ससे तत्थ तुह ।
पडिमा परिपाडि अवहलस ललदिसा अक्कम् (?) ॥"

एकशेषानेकशेषाभ्यामुभयोरप्येकमुदाहरणं यथा — "अद्यैवावां रणमुपगतौ"
इति ॥

समा यथा — "केचिद् वस्तुनी"ति । विवक्षयैषा सम्पद्यते —

**अर्थानां विप्रकीर्णानां कविनैपुणकल्पितात् ।**
**घटनादेव कल्प्येत घटितोक्तिर्मनीषिभिः ॥**

यथा —

"सच्चं बोळन्ति जणा मोणं संपत्थसाहणं तीति ।
कव्ळं मोणेण हि आ अज्जं देवत्तणं अप्पा ॥"

अ(स्य ? स्मिन् ) वाक्ये पुरातनस्यान्यस्य वाक्यस्य घटना ।

यद्वा —

"एक सावण अण्णहि नद्दपडमाह अमहि अत्थरिगत्थाळि सरउ अग्गहि गट्टुणनचित्तिळपळिमग्गसि कुमुत्थहि मुहपक्क असरि अपासि असिसिरु (?) ॥"

अत्रात्यन्तनक्तानां मृदूनामेकत्र घटना ।

**शृङ्खलोक्तिमिमामाहुरन्योन्यस्याभिधायिनीम् ।**
**शब्दतश्चार्थतश्चेति द्विधा सा परिगीयते ॥**

यथा —

"इमिणा सरएण ससी ससिणा विणिसा णिसाइ कुमुअवणं ।
कुमुअवणेण अ पुळिणं पुळिणेण अ सोहए हंसउळं ॥"

यद्वा —

"सङ्ग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्त्या च सप्ताब्धयः ॥"

**काकुस्वरपदच्छेदभेदाभिनयकान्तिभिः ।**
**सूच्यते यत्र चान्यार्थः सूच्योक्तिरिति सा स्मृता ॥**

तत्र काका यथा —

"यदि मे वल्लभा दूती तदाहमपि वल्लभा ।
यदि तस्याः प्रिया वाचस्तन्ममापि प्रियप्रियाः ॥"

अत्रैकया काका विधिः, अन्यया तु निषेधः प्रतीयते ॥

स्वरेण यथा —

"सुभ्रु ! त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद् भवन्ति दयिते ! सर्वा ममान्धा दिशः ॥"

अत्र दृष्टे इत्यत्र प्लुतस्वरकरणात् कुपितकान्ताप्रसादनपरमपीदं वाक्यमुत्कुपित-दृष्टिप्रसादपरतां प्रतिपद्यते । इत्थमुपरिष्टाद् द्रष्टव्यम् ॥

**अन्योक्तीनामनुकृतिश्छायोक्तिरिति कथ्यते ।**
**लोकच्छेकोन्मकोन्मत्तपोटामत्तोक्तिभेदिनी ॥**

यथा — 'लोचने निमीलयित्वे'ति ।

लोकोक्तिच्छाया यथा —

"यो हि दीर्घासिताक्षस्य विलासवलितभ्रुवः ।
कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥"

एवमन्यत्रापि द्रष्टव्यम् ॥

**यस्यां संव्रियते चार्थः सा संवृतिरितीष्यते ।**
**एषा संवृतिसंयुक्ता वक्रोक्तिः स्मरते मनः ॥**

**यथा स्वच्छाम्बरच्छन्ना योषितां स्तनमण्डली ।**
**वृतेर्विवृतिरप्यर्थो धातोर्नैका तथा बलात् ॥**

**द्योतका ह्युपसर्गाः स्युरतस्तन्नातिसंवृतिः ।**
**ज्ञाये(त) संवृतोऽप्यर्थः काकुप्रकरणादिभिः ॥**

**अनुक्तिसंवृतिः काचित् काचिदन्योक्तिसंवृतिः ।**
**(विरोधसंवृतिः) काचित् काचिद् व्याघातसंवृतिः ।**
**इति (षट्कारे ? षड्भिः प्रकारैस्तु) भूषिताका(र ? व्य)पद्धतिः ॥**

असंवृतिर्यथा — "त्वं जीवितमि"त्यादि ।

अन्योक्तिसंवृतिर्यथा —

"सकुण्डलं सकवचं दीर्घबाहुं महाबलम् ।
कथमादित्यसङ्काशं मृगी व्याघ्रं प्रसूयते ॥"

विरोधसंवृतिर्यथा — "मथ्नामि कौरवशतमि"ति ॥

व्याघातसंवृतिर्यथा —

"अयं देशो देशो न न न नहि देशो दमयितुं
परं भूमिर्भूमिर्न न न नहि भूमिः प्रभवितुम् ।
अयं कालः कालो न न न नहि कालः कलयितुं
परं वेला वेला न न न नहि वेला जनयितुम् ॥"

अत्र गृहीतकपटोन्मादेन यौगन्धरायणेन वत्सराजाय विक्रमार्थोऽयं देशः काल इति च निवेद्यते । अत्र चतुर्भिर्नञ्भिर्विधिरेव गम्यते व्याहताभसतानेन वाक्येन व्याघातसंवृतिरियम् (?) ॥

वक्रोक्तिसंवृतिर्यथा — 'मलयमरुतां व्राता याताः' इत्यादि । अथ यद्य न स्याज्जानर्थपुभां॥ं प्रेयांसं परित्याजयति परित्याअयति तत्तदस्मिन् साक्षाद् गत्वमारोपयत मपि यो निवर्तयति सहि तं धनं जयतीत्यर्थः। यमर्थो य एव निवर्तनेत्यादि वक्रोक्त्या सवृतीयते चेति वक्रोक्तिसवृतिरियम् (?) ॥

श्लेषोक्तिसंवृतिर्यथा —

"उद्दामोत्कलिकां विपाण्डररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥"

अस्याः संवृता तात्पर्यसमासोक्तेर्भेदः ॥

**सविरोधा सोत्तरेति द्वयमन्ये प्रचक्षते ।**
**विरोधस्तु पदार्थानां परस्परमसङ्गतिः ॥**

यथा —

"क्व युवतिमार्दवं क्व च महाहवदारुणता
क्व च वलयी करः क्व करिदन्तुरमुष्टिरसिः ।
क्व च नवयौवनं क्व कुसुमायुधनिःस्पृहता
तव ललनाविचेष्टितविरुद्धमहो चरितम् ॥"

"दिग्वासा यदि तत् किमस्य धनुषा सास्त्रस्य किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम्
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निव स्वामिनो
भृङ्गी सान्द्रसिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥"

**पदा(र्थ ? र्थानां) तु यः सारस्तदुत्तरमिहोच्यते ।**

यथा —

"राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥"

**अकर्तुः कर्तृतारोपादाभासोक्तिं प्रचक्षते ।**
**सा विवक्षा विशेषस्य प्रायः कोपं विगाहते ॥**

"कालिन्दि! ब्रूहि कुम्भोद्भव! जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे नर्मदाहं त्वमपि वदसि किं नाम कस्मात् सपत्न्याः।
मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीना-
मास्राम्भोभिः किमासां समजनि कुपितः कुन्तलक्षोणिपालः॥"

यद्वा —

"माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे॥"

(तद्व ? नन्व)त्र समाधिगर्भेति वक्रोक्तिः काचिदभ्यधायि। तदुदाहरणं "चन्द्रज्योत्स्नाविशदपुलिने" इत्यादि। इयं समाधिवर्त्मानुसारिण्युपमा भवितुमर्हति। नायिकानायकयोः परस्परयोः सादृश्यप्रत्ययात्। न। उपमावयवानां चतुर्णामुपमानोपमेयसाधारणधर्मसाम्यवाचिनामभावात्। किमेतत्। द्विविधा ह्युपमा, पूर्णा लुप्ता च। पूर्वस्या एवायं नियमः। अपरस्या एकद्वित्रिलोपेऽपि भावात्। एकलोपे यथा — 'चन्द्रकान्तं मुखं' 'चन्द्रसदृशं मुखमि'ति। द्विलोपे यथा — 'चन्द्रमुखी'ति। अत्र समाससामर्थ्यावसेयौ साधारणधर्मसाम्यवाचिनौ। त्रिलोपे यथा 'चन्द्रच्छायं मुखमि'ति। अत्र चन्द्रच्छायेव छाया यस्येति विग्रहः। उपमेयसाधारणधर्मसाम्यवाचिनस्त्रयोऽपि समाससामर्थ्यावसेयाः। तस्मादियं त्रिलोपिन्युपमा भवितुमर्हति। न खलु। लुप्तोपमायां न कदाचिदुपमानलोपो भवति। 'उपमानवर्ज्यं लोप' इति स्मरणात्। अस्मिंश्चन्द्रज्योत्स्ने'त्युदाहरणे भवतेत्युपमेयस्यैवोपपादनम्। ननु चन्द्रच्छायमित्यत्र उपमेय(स्यै)कस्यैवावस्थानम्। चन्द्रच्छाया यस्येति विग्रहः। चन्द्रस्य च कुत्रचिद् विच्छायत्वसम्भवात् चन्द्रशब्दश्चन्द्रगतमाह्लादकत्वं लक्षयति। पुनरपि मुखच्छायया अयोगात् सादृश्यनिबन्धनैव चन्द्रशब्दस्य मुखच्छायाप्रवृत्तिरिति पुरस्तादेव चन्द्रशब्देनोपमानं प्रतीयते। किञ्च पूर्वमुपमानमभिमन्यमानो हि भगवान् कात्यायनः 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वोत्तरपदलोपश्चे'त्यवोचत्। अन्यथा अनेकमन्यपदार्थे' (२. २. २४) इत्येव समासस्य प्रसिद्धत्वात्। एवं सति कुमुदगन्धिरित्यादिषु 'उपमानाच्च' (५. ४. १३७) इति इत्सिद्धिः। अत्र पक्षे 'उपमानानि सामान्यवचनैः', 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२. १. ५५,५६) इत्यारम्भः सार्थकः स्यात्। अन्यथा 'विशेषणं विशेष्येण बहुलम्' (२. १. ५७) इत्येव समाससिद्धेः।

शस्त्रीश्यामादिशस्त्रपूर्वनिपातनियमार्थश्चेत् स एव वक्तव्य इति समञ्जसम् । अपिच समास(न्धिसु ? सुब्धातु/कृत्तद्धिता(सु?)वसेयासु संक्षिप्तोपमासु द्वित्रिलोपौ वाक्यवसेयाताम्(?) पुनरेकलोपस्यैवेष्टत्वात् । 'चन्द्रज्योत्स्ने'त्याद्युपमानवति चोपमानोपमेययोर्भेदप्रतिपत्तिपुरस्कारेण भेदतिरोभावाभावाद् रूपकत्वं चास्या निरस्तम् । भेदे स्फुरत्युपमा, स्फुरितस्य भेदस्याप(न्न ? ह्नवे) समासोक्तिरित्युक्तम् । एवं चेद् रूपकनिमित्तभूताया गौण्या वृत्तेर्भेदेन तद्भावापत्तिरिति वृत्तिः कल्पनीया समद्युक्तिद्योतन्नभेदनारसन्धानवैधुर्येण(?) गौण्यैव च परिणमत इति । नच तद्भावाध्यवसानमात्रेणातिशयोक्तिः, अतिशयास्पदयोः क्रियागुणयोः प्रत्ययात् । सादृश्यमतिशयास्पदं चेत् । अस्य कोऽतिशयः । अथवा सादृश्यस्योभयाधिकरणत्वगतमतिशयितं विवक्ष्यते । उपमेयगतमेव विवक्षितमुपमानगतमर्थादापतितमिति चेद्, भावापत्तिकालेऽतिशयानुमीलनात् ।

"अलङ्कारान्तराणामप्याहुरेकं परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥"

इत्यर्थवादमात्रमेतत् । तर्हि अन्यथास्थितस्यान्यथा(कथना)दुत्प्रेक्षेषा । न । अन्यथाप्रकारस्याकथनात् । 'एष वृक्षशिखर' इत्यादिषु हीयमानार्थानुयायी स गुणः । इयमुक्तिर्वाक्यार्थवर्तिनीति भेदः । अत एवास्याः समाध्युक्तिरिति नाम । 'प्रतीच्छत्याशोकीमि'त्यादि वाक्यार्था अप्यवान्तराः 'इतीयं माधुर्यं स्पृशति च तनुत्वं च भजते' इति । परमवाक्यार्थप्रायाः, 'स्मितं किञ्चिद् वक्त्रे ललितमधुरो दृष्टिविभव' इत्यादिवत् । तस्मात् समाध्युक्तौ समाधिरेको निर्वाह्यः, समाधौ न तथेति यावत् । उपमेयमात्रवाचिनी समाध्युक्तिरुपमानमात्रवाचिन्याः समासोक्तेर्भिद्यत इति स्पष्टम् । अत्र केचिदनयोर्भेदमामनन्ति — यत्र प्राकरणिकेऽप्राकरणिको धर्मोऽध्यस्यते, सा समाध्युक्तिः ।

"दूरपडिवद्धराए अवऊहत्तंमि दिणअरे अवरदिसम् ।
असहंतिव्व किलिम्मइ पिअअमपच्चक्खदूसणं दिणळच्छी ॥"

यत्र पुनरप्राकरणिके प्राकरणिकधर्मः, सा समासोक्तिः ।

यथा —

"पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥"

उभयोरपि धर्मस्याध्यासः समान इति चेत् । न । समाध्युक्तौ मानसोऽध्यासः प्रतीयते । यथा—

"सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरन् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।
उपप्रासादाग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥"

इति । प्रकटमुत्तरम् । तन्न साधीयः । प्राकरणिकेऽप्राकरणिकाध्यासो नाम उपमेयमात्रवचनम् । उपमेयस्यैव प्राकरणिकत्वात् । अप्राकरणिके प्राकरणिकाध्यासोऽप्युपमानमात्रवचनम् । उपमानस्याप्राकरणिकत्वात् । मानसवाचिकभेदो न प्रयोजकः । धर्माध्यासस्य पुनरदृष्टत्वात् । तस्मादुक्तप्रकारा एव भेदाः । अत्रापरे

"प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः ।
अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥"

इति लक्षयन्तः,

"दन्तप्रभासुमनसं पाणिपल्लवशोभिनीम् ।
तन्वीं वनगतां नीलजटाषट्चरणावलीम् ॥"

इत्युदाहरन्ति । अत्र दन्तप्रभापाणिजटा नायिकाविशेषणभूता यथाक्रमं लतासुमनःपल्लवषट्चरणनिरूपणया तद्भावमापद्यन्ते । तनुत्वं नायिकालतयोः साधारणो धर्मः । वनशब्देन च श्लेषेण नायिकातपश्चर्याधारभूतमुदकं लताधारेण काननेन रूप्यते । अत्र प्रकृता नायिका । लतायाश्च समानानि विशेषणानि । तत्सामर्थ्येन च नायिकयोपमेयया लतोपमानत्वेनाक्षिप्यते । तेनेयं समासोक्तिरिति समाधिसमासोक्त्योरभेदं मन्यन्ते । अत एवैते समाधिगर्भां पृथङ् न लक्षयन्ति । सूक्ष्ममीक्षमाणा नैवमाचक्षते । तस्मात्,

"श्रुतिमधुरया वाचा मुग्धाम्बुधिध्वनिधीरया
प्रणतपरिषच्चेतस्तापच्छिदामृदितं मुखम् ।
कनकनिकषस्निग्धच्छायं वहंस्तरसा श्रिया
मरतकमणिश्यामः शार्ङ्गी नभस्युदजृम्भत ॥"

इत्यादि समाध्युक्तिरिति मन्तव्यम् । नन्वकर्तुः कर्तृतारोपाभासोक्तिरप्येषैव । यथा—'माघमासे रटन्त्याप' इत्यादिसादृश्यवति समाध्युक्तिः । न तथा-

भासोक्तिः । माघमासेऽपां प्रकाशत्वमात्रे तद्वचनम् । अत्र का वृत्तिः । तात्पर्यम् । तत् किं वृत्तित्रयाद्.... । बाढम् । क्वा गतं तत् । वाक्यं गतमेतत् । पदान्येव वाक्यमिति चेत् । सत्यम् । तथापि संसर्गप्रतिपादकः पदानां समूहो वाक्यमिति बलादभ्युपगन्तव्यम् । अत्र प्रशास्त्यन्यमुख्यं या प्रतिपाद्यं तत्रैतस्या अशक्तेस्तल्लक्षणागौणिभ्यामनुपपत्त्यभावादसम्बन्धाश्च (?) । स्यादेतत् । अपां पुनीमह इति रटनानुपपत्तेरेवं वक्त्रसम्बन्धं पलायितृत्वमात्रं लक्ष्यत इति । अत्र काममस्तु । 'कालिन्दि ! ब्रूहि कुम्भोद्भव' इत्यादिपु नैवं निर्वोढुं शक्यम् । किञ्च 'निश्शेषच्युते'त्यादि ।

"शान्त्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिं
क्वापि क्वापि (गु? ग)णाः पठन्ति बहुशो नातिप्रसिद्धाक्षरम्
विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यते शिष्यते
नागै रागिषु रंस्यतेऽत्स्यति जगन्निर्वेक्ष्यति द्यामिति ॥"

"मरतकतटे मन्दाकिन्या मतङ्गजकामिनी
कनककमला (मोदे)र्वीतैर्विनीतपरिश्र(मैः ? मा) ।
दयितवसतिं यान्ती मन्दायते मदिरेक्षणा
श्रवणसुभगं श्रुत्वा गीतं यशस्तव किन्नरैः ॥"

इत्यादिपु तात्पर्यादन्यदनुमन्तव्यम् ।

"पृच्छामः किमिव क्षमाभरमति द्वावेव तज्ज्ञौ तयो-
रेकः प्रस्फुरदाननद्युतिविषज्वालावली + + + ।
अन्योऽयं तव बाहुराहवजयश्रीसङ्गकेलिक्रिया-
दुष्प्रापावसरस्तृतीयमपरं नेद्दक्षमीक्षामहे ॥"

"वेवसि अणिमिसणअणो जप्पासि विणरअण्णदस्ससेपठिको ।
सुह अतुज्झदोसोहअं हिअअं निट्ठुरमज्झइर (?) ॥"

इत्यादिष्वपि वाक्यार्थस्याभिधीयमानत्वान्मुख्यार्थबाधतद्योगप्रयोजनाभावाद् वृत्तित्रयस्यासम्भवे व्यतिरिक्तमन्यदवश्यमभ्युपगन्तव्यमिति ॥

**भूषणायैव जायन्ते प्रायशश्छलजातयः ।**
**कविभिर्निपुणैरुक्ता वक्रोक्तिविनिवेशिताः ॥**

**ये गुणा येऽप्यलङ्काराः स्त्रीणां ते सौष्ठवान्वयात् ।**
**श्लोकभङ्गिसमारूढाः श्लाघ्यैर्नागरिकैर्जनैः ॥**

यथा —

"अङ्गानि चन्दनरसैः परिधूसराणि
ताम्बूलरागसुभगोऽधरपल्लवश्च ।
अच्छाञ्जने च नयने वसनं तनीयः
कान्तासु भूषणमिदं विभवस्तु शेषः ॥"

गुणालङ्कारवर्गस्य तद्वत् काव्यावलम्बिनः ।
वक्रोक्तिविनिवेशेन काचिज्जायेत रम्यता ॥

उक्तं हि —

"उपर्युपरि कव्युक्तिः कवेः स्फुरति यद्वशात् ।
भूषाः प्रयान्ति नवतां लता इव मधुश्रिया ॥"

इति ॥

वक्रोक्तयश्च तैः प्रायः शोभां विभूतिभूयसा ततः ।
वक्रोक्त्यलङ्कारसंज्ञा विलम्बिन नियमः क्वचित् ॥
यत्रे यं केनालवस्याद् वक्रोक्तिश्चित्तहारिणी ।
तस्यानुगुणमात्रस्याद् व्यापारत्वं निरूप्यताम् (?) ॥

इति ॥

वाक्यभेदो वाक्यशेषो वाक्यच्छित्तिराधिक्रिया ।
अध्याहृतिरपोद्धारस्तन्त्रावृत्त्येकाशिष्टयः ॥
ऊहो विपरिणामश्च लिङ्गोद्भेदश्च वाक्यगाः ।
अन्ये च तादृशा उक्तिवैचित्र्यपददायिनः ॥
लोके वेदे च काव्ये च प्रसिद्धाः प्राज्ञसम्मताः ।
यथोचितं प्रयोगेषु स्थाप्यन्तामितनस्थितिः (?) ॥

तत्रैकार्थपरस्य पदसमूहस्यावान्तरतात्पर्याद् वाक्यभेदः ।

"पश्य पार्वति ! पयोदपङ्क्तिभिर्व्यक्तपङ्कमिव जातमेकतः ।
खं हृतातपजलं विवस्वता नातिकिञ्चिदिव शेषवत्सरः ॥"

अत्र स्पष्टो वष्टो (?) वाक्यभेदस्य विवक्षितस्य काव्यस्य प्रकरणादिभिरवसिते अभिप्रायान्तरेण वाक्यस्यापरिभूषणम् ।

वाक्यशेषो यथा —

"वन्द्यः पितेव स भवान् नलकूबरस्य
रम्भा स्नुषा धनपतेरिव सा तवापि ।
यत्त्वन्यदत्र हृदयान्न तदेति कण्ठं
दोषस्तथापि यदि तत् स्मृत एष रुद्रः ॥"

अ(यं ? त्र) स्नुषायामरमथाः, ततस्त्वत्तोऽपि क्व पापीयानिति वाक्यशेषः ॥

विवक्षितार्थस्य बाधे वाक्यान्तरेण वाक्यस्य भेदो वाक्यच्छित्तिः ।

यथा —

"विद्युद् विद्युल्लता नेयं सा चेत् कथमचञ्चला ।
कथं जलधराभावे कथं वा पृथिवीतले ॥"

यद्वा — लक्ष्मणः — 'शैलः सोऽयं ककुभसुरभिरि'त्यादि । अस्मिन् द्वितीयोदाहरणे पूर्ववाक्यस्य बाधनाभावाद् न वाक्यविच्छित्तिः । वाक्यसमाप्तिर्नाम धर्मान्तरमौपनिषदा(?) ।

पूर्वस्मिन् वाक्ये प्रस्तुतस्योत्तरत्राकर्षणमधिक्रिया । यथा —

"कर्ता मखानां बहुदक्षिणानां भर्ता भुवः सागरमेखलायाः ।
दयानिधिर्दानवतारके न ममार्ज दीनाश्रुजलानि वीरः ॥"

अत्र राम इत्यधिक्रियते ॥

वाक्यस्य न्यूनतायामाकाङ्क्षानिवृत्तये विशिष्टक्रियाकारकपदादेरुपादानमध्याहारः । (यथा)—

"यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥"

यद्वा —

"मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ! ॥"

पदार्थसमवायार्थविशेषस्य सर्वनाम्ना पृथक् प्रत्यवमर्श(न ? नात्) स्वशब्देनावस्थानमपोद्धारः । यथा—'पत्युः शिरश्चन्द्रकलामनेने'त्यादि । अनेनेति रञ्जयित्वापदार्थेन समवायिनो रागस्य पृथक् प्रत्यवमर्शनम् । यद्वा—

"नालिकेरफलषण्डताण्डवक्षुण्णतत्कुहरवारिवीचयः ।
यत्र यान्ति मरुतः सरालतां चूतपक्षकदलीसमृद्धयः ॥'

यत्रैकमनेकसिद्धये प्रयुज्यते, तत् तन्त्रम् । यथा —

"द्वारं खड्गिभिरावृतं बहिरपि प्रक्षिप्तगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्वैरिणां मन्दिरे
राजन्! सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥"

यत्र प्रतिवा(क्यमेव क ? क्यमेक)मावर्तते, सा आवृत्तिः । यथा —

"सीता सौधतलं निरीक्ष्य हरते दृष्टिं झटित्याकुला-
मन्योन्या(सि ? र्पि)तचञ्चुदत्तकबलैः पारावतैर्दूयते ।
इन्दोर्दूरत एव नश्यति विशत्यन्तर्गृहं वाससः
(स्रष्टा ? प्रच्छा)द्याननमञ्चलेन च निशास्वस्तत्रपा रोदिति ॥"

शास्तानुशिष्यते कुत्रैकस्योपयोग एव विशिष्टः । (?)

"क्वचिद् भस्मापाण्डु क्वचन कुचकाश्मीरकपिशं
क्वचिद् व्यालासङ्गि क्वचन मणिकाञ्चीपरिचितम् ।
क्वचिद् व्याकीर्णास्थि क्वचन विलसद्रत्नवलयं
रहःसाक्षि श्रेयो दिशतु शिवयोः केलिशयनम् ॥"

सम(र्थो ? र्थ)द्वयार्थलिङ्गवृत्तिवचनान्तराणां विमृश्योपादान(स ?)मूहः । यथा— 'चूडाचुम्बितकङ्कपत्रमि'त्यादि । इत्युक्तमुत्तररामचरिते भवभूतिना लवमेकमुद्दिश्य ज(नं ? नकः) श्लोकमेनं पठितवान् । पश्चाद् महावीरचरिते धत्ते त्वचं रौरवीमित्यूहयित्वा (लक्षणो ? रामलक्ष्मणौ) द्वावुद्दिश्य तमेव श्लोकं कुशध्व-(ज वि ? जोऽपि) पठति ।

अन्यथोपात्तस्यापुनरुच्चारितस्यैवार्थान्तरानुरोधात् लिङ्गवचनविभक्त्यादिभिः अन्यथापि सम्बन्धो विपरिणामः । यथा —

"तस्मिन् जीवति जीवामः पञ्चेषुः पञ्चमध्वनिः ।
ते (च चैत्रेषु प(कै ? कै)लातकोलीकेलयोऽनिलाः ॥"

शब्दान्तरोपलब्धवस्तुसामर्थ्यात् सामान्याक्षिप्तस्य विशेषेऽवस्थापनं लिङ्गोद्भेदः । य(द्वा ? था) — 'कश्चित् कान्ताविरहगुरुणे'त्यादि ।

ननु कः पुनरध्याहारवाक्यशेषयोर्विशेषः । शब्दाकाङ्क्षानिवर्तकोऽध्याहारः । अर्थाकाङ्क्षानिवर्तको वाक्यशेषः । तर्ह्यध्याहारसंवृत्योः किमन्तरम् ।

तत्र संवृतौ तात्पर्यमत्र(नेतित्युत्तरवाक्यार्थरूप....नीकत्रयेव पूर्ववाक्यार्थापस्थापनमिति भित्तेरपि स्पष्टो भेदः । अधिक्रियया पूर्ववाक्यार्थप्रस्तुताकर्षणनियमः स्यात् तत्रावृत्त्योरैक्यमिति । ननु नैकार्थशब्दसाध्यं ततं तत् तथावृत्तिरिति निश्लेषं तत्र योर्नान्तरं तत्र द्वयोरपि कथं न विवक्षितम् । तथाहि— द्वारं घटिभिरित्यनेन तथाविभवशालीकरिक्षितं च तद्रिपुराजमन्दिरमेवमवस्थां गमितीह विवक्ष्यते । न तथा तौ च दुर्जनवाणीत्यादिष्विति । यथा — यत्रोदाहरणमेतत्

प...साग अण वसत्तरा अतीळो अण्णाणं दअत्तवित्तसप्परिणह भूसण
दिणव गुणदोदे ॥

इति । (नि) शि खण्डिता नायिका प्रातरादित्यमुपतिष्ठमानाया धृष्टमागतं दयितं चोद्दिश्य तद्वचनम् । एकत्र तात्पर्यातिशयाद् न वाक्यभेदः । दीपकावृत्त्योः का भिदास्य साम्यफलं दीपकं नेयमित्युक्तम्(?) ।

"आदिमध्यान्तविषयाः प्राधान्येतरयोगिनः ।
अन्तर्गतोपमाधर्मा यत्र तद् दीपकं विदुः ॥"

इति सर्वमनाकुलम् ॥

**एतत् सर्वं सु(सपदां ? संपादं) कवेरुक्तिविशेष(त)ः ।**
**शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग् विदुः ॥**
**अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।**
**द्वयोर्गुणत्वे व्यापारप्राधान्ये का(र्य ? व्य)मेव तत् ॥**
**अतः शब्दार्थयोर्यस्मिन्नापाद्य गुणतां कविः ।**
**उक्तेः प्राधान्यमादध्यात् काव्यस्योच्छ्वसितं हि तत् ॥**

इति ।

**ध्वनिवर्णपदार्थेषु वाक्ये प्रकरणे तथा ।**
**प्रबन्धेऽप्याहुराचार्याः केचिद् वक्रत्वमाहितम् ॥**

ध्वनिवक्रता यथा —

"तुह करकमळं कमळं चंदो चंदमुहि ! तुज्झ मुहचंदो ।
कमळा उण कमळच्चिअ चंदो चंदोच्चिअ वराओ ॥"

इति । वर्णवक्रता यथा —

"पतद्धाराः पारावतविरुद्धतारुतावाचालवलभि
कानिश्शङ्कास्फुरितरमणीकण्ठमणिता (?) ।

तटिल्लेखालोकक्षणगुणितदीपांशुकपिशै-
गवाक्षैर्लक्ष्यन्ते निशि ध(र?)निकयूनामिह गृहाः ॥"
"नवाम्बुदकुटुम्बिनः कटुकदम्बकादम्बरी-
मदान्धमधुपायिनो बहलयन्ति कौतूहलम् ।
विशृङ्खलशिखावलक्षुभितभूरिभूरीह्रदा-
स्तदुन्मिषसमुन्मदनवह्नयो वासराः (?) ॥"

पदपूर्वार्धवक्रता यथा —'रामोऽस्मि सर्वं सहे' । 'रामोऽसौ भुवनेषु विक्रमगुणैर्यातः प्रसिद्धिं परामि'त्यादि ॥

प्रत्ययवक्रता यथा — 'मैथिली तस्य दाराः ।' 'फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकरा' इत्यादि ॥

वाक्यवक्रता यथा —'उपस्थितां पूर्वमपास्य लक्ष्मीमि'त्यादि ।

यद्वा —

"एकेनाभ्यधिके जयाम्यहमथान्यूने चतुष्कोऽश्मना
न्यूने वाभ्यधिकेऽपि वा तव जयो द्वाभ्यां गिरीन् नन्दति ।
न न्यूनेऽधिके पुनः पण इति व्यामोह यथा छलै
द्वावायामधिगन्तुमद्रितनया द्यूते हरः पातु वः (?) ॥"

प्रकरणवक्रत्वं यथा — रामायणे माणिक्यमृगानुसारिणो रामस्य करुणाक्रन्दकातरया जनकराजपुत्र्या तत्प्राणपरित्राणाय स्वजीवितपरिरक्षानिरपेक्षया लक्ष्मणो निर्भर्त्स्य प्रेषितः । तदेतदत्यन्तमनौचित्ययुक्तम् । यस्मादनुचरसन्निधाने प्रधानस्य तथाविधव्यापारकरणमसम्भावनीयम् । तस्य च सर्वातिशायिचरितयुक्तत्वेन वर्ण्यमानस्य (परित्रातृलक्ष्मणस्य सीतया करुण ?)तेन कनीयसा प्राणपरित्राणसम्भावनेत्येतदसमीचीनमिति पर्यालोच्य उदात्तराघवे कविना वैदग्ध्यवशेन मारीचमृगमारणाय प्रयातस्य परित्राणार्थं लक्ष्मणस्य सीतया करुणातुरया रामः प्रेरित इत्युपनिबद्धम् ।

**एतान्युक्तप्रकारेषु सम्भवन्तीति बुध्यताम् ।**

तथाहि — ध्वनिवक्रत्वं नाम सूच्योक्तिप्रकारः । अन्यथा,

"एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहि ।
एद्दहमेत्तावत्था एद्दहमेत्तेहि दिअहेहि ॥"

"वइ विवरणिग्गअदळो एरंडो साहइ व्व तरुणाणं ।
एत्थ घरे हलिअवहू एद्दहमेत्तत्थणी वसइ ॥"

इत्याद्यर्थमभिनयवक्रत्वमपि पृथगङ्गीकरणीयं स्यात् । किञ्च वक्रो(क्ति)कारेणैत-मोद्दिष्टम् । तथाहि —

"कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट् ।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः ॥
वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता ।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः ॥
वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा ।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति ॥"

"जं वहजवरिअड्ढं मज्झसुओ एक्कवहरविणिईओ ।
कळदूसणिए सावथेध्धणाण तुहमत्थ ए (?) ॥"

"पळमवाणिअ अह्ह ताकत्तो अम्ह्राएध्घक्कत्तिओ
इअ विळुळिआइ अमुहध्घरम्मिव परिचट्टए सोहा (?) ॥"

इत्यादयः ।

"वक्रभावप्रकरणे प्रबन्धेऽप्यस्ति यादृशः ।"

इत्येतावदेवोद्दिष्टम् । वर्णविन्यासवक्रत्वसोमा सः (?) एतदेव वर्णविन्यास-वक्रत्वं चिरन्तनेष्वनुप्रास इति प्रसिद्धमिति व्याख्यातम् । अन्यान्यपि सूच्य-समाध्यारोपाभासच्छलजात्युक्तिषु द्रष्टव्यानि । प्रकरणवक्रत्वसंविधानसूत्रताया नातिरिच्यते प्रबन्धवक्रत्वमपि । रीति· गतिवृत्त्यादिनिर्वहणमेवेति मन्तव्य-मिति ।

+ + + व्यतिरेकेण षट्त्रिंशल्लक्षणान्यपि ।
ऊर्ध्वरेखादिवत् काव्ये केचिदाचक्षते बुधाः ॥
अन्तर्भवन्ति तेष्वेव तानि किं शब्दविस्तरैः ।

तथाहि —

**विभूषणं चाक्षरसङ्गतिश्च शोभाभिमानौ गुणकीर्तनं च ।**
**प्रोत्साहनोदाहरणे(हियु?)निरुक्तं गुणानुवादोऽतिशय(स्य?श्च)हेतुः ॥**

सारूप्य(सिद्धय ? मिथ्या)ध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
(आख्यान)याच्ञाप्रतिषेधपृच्छा(दृष्टा)न्तनिर्भासनसंशयाश्च ॥
आशीः प्रियोक्तिः कपटं क्षमा वा प्राप्तिश्च पश्चात्तपनं तथैव ।
तथानुवृत्तिर्ह्युपपत्तियुक्ती कार्यानुनीतिः परिदेवनं च ॥
षट्त्रिंशदेतानि तु लक्षणानि प्रोक्तानि वै भूषणसम्मितानि ।
काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसं तु ॥

अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव चित्रार्थैस्तद् भूषणमिति स्मृतम् ॥

यथा — 'लीनेव प्रतिबिम्बिते'त्यादि । अत्रोत्प्रेक्षापरम्परैव हीयं सातिशयकामामवे (द्वेकयति स्थाने निवेशनं चैतद्वेदकं संविधानौचित्यशालिनि कविव्यापारे पतति । स एव चेल्लक्षणं काव्यशरीरं भवति ?।) तदेव चेल्लक्ष्यलक्षणयोर्द्वैतापत्तिः । तच्छोभाकरणं चेदुक्तं मार्गानुप्रवेशः ।

तत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥

यथा — 'अङ्गे न्यस्योत्तमाङ्गं प्लवगकुलपतेरि'त्यादि ।

सिद्धैरर्थैः समं कृत्वा (ह्यर्थैः?) ह्यसिद्धोऽर्थः प्रयुज्यते ।
यत्र (वि ?)श्लिष्टविचित्रार्था सा शोभेत्यभिधीयते ॥

यथा — 'मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते' इत्यादि लक्षणोदाहरणान्तर्भावाद् द्रष्टव्याः । अत्र दिङ्मात्रं (प्रपञ्चितं?) दर्शितम् । विस्तरभयान्न प्रपञ्चितम् ॥

इति षष्ठं प्रकरणम् ॥

---

## अथ सप्तमं प्रकरणम् ।

अथ परिष्कृतिनिरूपणम् —

श्रुताभियोगप्रतिभाशक्तियुक्तः कविः स्मृतः ।

इति । उक्तं हि —

"नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥"

इति ।

"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥"

इति च ।

अपिच,

श्रमो नियोगक्लेशौ च प्रतिभेति चतुष्टयी ।
कैश्चित् कविभिराख्याता कवितायाः परिष्क्रिया ॥
श्रमः स(र्व)कलावीक्षा नियोगस्तस्य शीलनम् ।
स क्लेशः करणोद्योगः प्रतिभा भास्वती मतिः ॥
प्रज्ञा नवनवोन्मेषशालिनी प्रतिभेति वा ।
एवंविधपरीवारः कविः कुर्वन् निगुम्फनम् ॥
वाक्यकार्मणसम्पत्त्या रसाब्धौ मज्जयेज्जगत् ।
नवोऽर्थः सूक्तिरग्राम्या श्राव्यो बन्धः स्फुटा श्रुतिः ॥
अलौकिका(र्थानु? र्थयु)क्तिश्च रसमाहर्तुमीशते ॥
वाक्यसंवननायानं कवेरेष महान् भरः ।
तच्च संवननं प्राज्ञैर्वाक्यार्थादिभिरुद्भवेत् ॥
भूतपूर्वस्य मन्त्रस्य दर्शनाद् ऋषयो यथा ।
नवगुम्फार्थयोस्तद्वद् दर्शनात् कवयोऽभवन् ॥
आर्षं शब्दाद् भुतं यत्तददृष्टसुखसाधनम् ।
कवेः सातिशयो गुम्फः सद्यो निर्वृतिमावहेत् ॥
अस्मिन्नपारे संसारे कविरेव प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥

इति ।

एवं स्वरूपमुक्त्वा तद्भेदलक्षणमाह । पूर्वमेवं भेदोद्देशः कृ(त)ः —

गुणप्रधानो यो रीतिं वैदर्भीं प्रतिपद्यते ।
विपर्श्चारवरसौभाग्यां सत्कविः प्रथमः स्मृतः ॥

यथा वाल्मीकिकालिदासादय ।

**यो वक्रोक्तिप्रधानः स्यात् स विदग्ध इतीष्यते ॥**

यथा व्यासबाणादयः ।

**अर्थालङ्कारनिर्बन्धी ज्ञेयः कविररोचकी ।**

यथा माघभारव्यादयः ।

**यः श्लेषचित्रयमकनिर्बन्धस्तोमभूयसीम् ।**
**गौडीं च श्लाघते स स्यात् सतृणाभ्यवहारकः ॥**

यथा शिवभद्रादयः ।

यथाक्रमं सत्कविविदग्धारोचकिसतृणाभ्यवहारिणामुक्तय उदाह्रियन्ते—

"स्फुरति बहुशो बाहुः सव्येतरः सरतालकं
तरलनयनं धौराधौतालिकन्दलितं मुखम् (?) ।
अलसललितैरङ्गैरालिङ्गितु किमुपैति सा
मदनविवशा वर्षारात्रौ मतङ्गजगामिनी ॥"

"प्रबुध्यते नूपुरशिञ्जितैः पुरं
विशृङ्खलं क्रोशति मेखला खला ।
तवाभिसारव्रतवेषधारणे
स विस्मृतश्चण्डि! कथं नु डिण्डिमः ॥'

"पन्थाः स एष सखि! सङ्कुलमेघनाद-
निर्यन्त्रगुप्तमणिनूपुरकाञ्चिघोषः ।
वर्षानिशासु दयितस्य गृहं व्रजन्त्या
लाक्षायितं चरणयोर्मम यत्र पङ्कैः ॥"

"गजकदम्बकमेच(क)मुच्चकै-
र्नभसि वीक्ष्य नवाम्बुदमम्बरे ।
अभिससार न वल्लभमङ्गना
न चकमे च कमेकरसं रहः ॥"

इति ।

**समयो नातिलङ्घ्यः स्यात् कविभिः सकलैरपि ।**

समयस्य भेदाः प्रकटयति —

**सतोऽप्युपेक्षणं ज्ञेयमसतश्च परिग्रहः ।**
**बाहुल्यान्नियमः क्वापि सतश्चैवोपवर्णनम् ॥**
**चतुर्धा समयो वाच्यः**

इति ।

सतोऽप्युपेक्षा —

**यथाशोकतरोः फलम् ।**

इति । यथा —

"रमणी(य ?)चरणाम्भोजस्पर्शसम्भावितात्मनः ।
अ(न्योन्य ? नेन) किमशोकस्य फलेन सुमनोजुषः ॥"

**फलपुष्पे चन्दनस्य**

यथा —

"+ + + + + + + + कादाचित्कैः परे फलैः ।
पादपा नोपकुर्वन्ति स्वेन नित्यमचन्दनाः ॥"

"सेवन्ति तीरवड्ढं अकुसुमभरा अत्तचन्दणलआ ।
ळिद्धो मत्तणदं पवहे वणगिरिदाणळप्पवहा (?) ॥"

इत्यादि चिन्तनीयम् ।

त्याज्यम् —

**नालिकेरस्य फुल्लकम् ।**

यथा —

"मधुमन्ति सुगन्धीनि न सन्ति कुसुमानि चेत्
अलीनां नालिकेरस्य किं फलं कठिनैः फलैः ॥"

असतः परिग्रहस्था(ना)नि —

**समुद्रे पङ्कजं वर्ण्यं**

यथा — 'संखकुळमि'त्ति स (?)

**हंसाः सर्वसरःस्वपि ।**

यथा — 'सहंसलेखानि सरस्तटानि' । सर्वसरःस्वपीत्युपलक्षणं, तेन सरितोऽपि ग्राह्याः । यथा —

"सुनूपुरक्षोभपदाभिरासीदुद्विग्नहंसा सरिदङ्गनाभिः ।"

(इति),

"परिसरपुलिनेषु निम्नगानां सपदि समागतराजहंसयूथाः ।"

इति च ।

**गिरिषु स्वर्णरत्नानि**

यथा रैवतकवर्णने —

"क्रान्तं रुचा काञ्चनवप्रभाजा नवप्रभाजालभृतां मणीनाम् ।"

इत्यादि ।

**ज्योत्स्नापानं चकोरकैः ।**

यथा —

"विततदलभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः ।
मदचपलचकोरचञ्चुकोटीकवलनतुच्छमिवान्तरान्तराभूत् ॥"

**यशोहासगतं शौक्ल्यं**

यथा —

"यशःस्तोमानुच्चैरुपचिनु चकोरप्रणयिनी-
रसज्ञापाण्डित्यच्छिदुरशशिधामभ्रमकरान् ॥"

इति ।

"जस्सविळक्कगं तिणहं पुणपडिसद्दानि सामुहपळिक्खळिआ ।
जोह्वाकव्लोळा विअ ससिधवळासु रअणीसु हसिहच्छेआ ॥"

**कार्ष्ण्यं चेतरपापयोः ।**

यथा — 'अयशोमलिनं मुखमि'ति । यथा शबरसैन्यवर्णने 'अशुभ-कर्मसमूहमिवैकत्र समागतमि'ति ।

**प्रतापस्य च तीव्रत्वं स्वादुत्वं वचसामपि ।
स्वभावस्य च सौरभ्यं**

इति । यथा—

"तीव्रः प्रतापो मधुरं वचस्ते यशोऽवदातं सुरभिः स्वभावः ।"

इति ॥

**लौहित्यं रागकोपयोः ।**

यथा—

"गुणानुरागमिश्रेण यशसा तव सर्पता ।
दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ॥"

"सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीडया ।
मुहुर्मुहुर्दशनविखण्डितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ॥"

प्रतापस्यापि लौहित्यं वक्तव्यम् ।

**नीलश्यामलकृष्णानामैक्यं ज्ञेयं प्रयोगतः ।**

यथा — "हलधरपरिधानश्यामलैरम्बुवाहैः" इति । "सान्द्राः श्यामरुचः पयोदाः" इति ।

नियमस्थानानि —

**नियम्यं जातिपुष्पस्य वर्षास्वेवोपवर्णनम् ।**

यथा —

"स्निग्धैर्मयूरवर्णैरुच्छ्वसिताभिश्च जातिशाखाभिः ।
शीतैः पुरो मरुद्भिर्वर्षारम्भस्य सूचिता लक्ष्मीः ॥"

**कौमुदी शुक्लपक्षेषु**

यथा — "बहुलपक्ष इव राजशून्य" इति ।

**वसन्ते कोकिलध्वनिः ।**

यथा —

"अप्रगल्भकलकण्ठपञ्चमाः किञ्चिदुच्छ्वसितचूतशाखिनः ।
जातिमात्रमलयाद्रिवायवः केऽपि चैत्रदिवसाः समाययुः ॥"

**+ + + + + + + + मलये चन्दनद्रुमः ।**

मलयजा इति चन्दनस्यैव नाम ।

**सदृशेन पदार्थेन तत्का(र्योपादा ? र्यस्योपपाद)नम् ।**

यथा—

"अविरतरतक्लान्ता कान्ता कदाचन काचन
क्वचन तिमिरावासे वासो विहाय सुखस्थिता ।
तदनुभवतः कीर्णे धूर्ते प्रवर्तयति क्षणात्
तरलतरयत्येकं पाणिं करोत्य(प)रं वपुः (?) ॥"

**इत्याद्युन्नेयमन्यत्र प्रसिद्धं सन्निबन्धनम् ।**
**अन्ये सामयिका धर्मा ज्ञेयाः शब्दनिबन्धने ।**
**पदार्थावृत्तयः सह्या वृत्तिच्छादनतः क्वचित् ॥**

यथा —

"एताः कूलकरञ्जकुञ्जकुहरव्यासक्तकालोरग-
ग्रस्तानेककपोतचीत्कृतरवोच्चण्डास्तटीभूमयः ।"

अत्र कूलपदार्थस्य कूलतटीशब्दाभ्यामावृत्तिः । यद्वा —

"मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां सरोजसन्तानमिवाकरोदपाम् ॥"

इति । अत्र पद्मपदार्थस्य पद्मशब्दाभ्यां सरोजशब्देन चावृत्तिः । क्वचिद् रसातिशयादिष्ववृत्तिच्छादनेऽपि —

"कङ्कासिन्याः पृथुकुचतटे वक्षसोत्पीडये(हं ? यं)
प्रेमास्विन्नं प्रचलनयनं वक्त्रमालोकयेयम् ।
लीलालोलां प्रणयमधुरां वाचमाकर्णयेयं
वाचं रुन्धन् वदनकमले वक्त्रमावर्जयेयम् ॥"

अन्यच्च,

**अनुकम्पाद्यतिशयो यदि कश्चिद् विवक्ष्यते ।**
**न दोषः पुनरुक्ते(ति ? पि) प्रत्युतेयमलङ्क्रिया ॥**

"हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥"

यद्वा —

"किमुवाच वचो रामः किमुवाच च लक्ष्मणः ।
सुमन्त्र ! वनमासाद्य किमुवाच च मैथिली ॥"

**सहन्ते परमावृत्तिं लाटानुप्रासरागिणः ।**

"अनेन सागरानूपान् सागरानूपजान् द्रुमान् ।
सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ।
गिरीन् गिरिप्रस्रवणान् प्रवाहान् गिरिकाननान् ॥

ति,

"गिरिप्रसक्तानि गिरींश्च पश्यन् गिरीन् गिरीशप्रतिमो जगाम ।"

इत्यादयो निर्वाह्याः ।

**कदाचिदपि नेष्यति सिद्धिरद्धान्तगोचराः (?) ।**

यथा — "सौन्दर्यविश्रमभुवो भुवनाधिपत्य" इत्यादि ॥

**पादान्ते न क्वचित् सन्धिवावर्यं दृष्टेर्विलम्बनात् ।**

"तडिल्लता किं न स्थैर्याद् वल्ली किन्नु हिरण्मयी ।
सौकुमार्यात् पुनर्नैषा आ ज्ञातं कापि कामिनी ॥"

**लघोर्गुरुत्वं पादान्ते न सर्वत्रेष्यते बुधैः ।**

अत इन्द्रमालावसन्ततिलकयोर्लघोर्गुरुत्वं न द्रष्टव्यम् । यथा —

"विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।"

इति । "अम्बास्तवेषु तव तावदकर्तृकाणी"त्यादि । शार्दूलविक्रीडितेऽपि क्वचित् । यथा —

"मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणम्
आ ज्ञातं स जटायुरेव जरसा क्लिष्टो वधं वाञ्छति ॥"

इत्यादि निर्वाह्यम् ।

**गुरोरपि लघुत्वं च पादान्ते क्वचिदिष्यते ।**

यथा —

"तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।
अल्पव्ययेन सुन्दर! ग्राम्यजनो मृष्टमश्नाति ॥"

**वृत्तगन्धिषु गद्येषु ख्यातं वृत्तं सपूरणे (?) ।**

दोष इत्यर्थः । यथा — "सुरुभटानिनदभरिते"ति ।

**पादस्यादौ न खलुचवतहन्तादयः स्मृताः ।**
**विशि(ष्टार्थ)विवक्षायां तेऽपि सह्याः क्वचित् क्वचित् ॥**

यथा — 'खलूक्त्वा खलचेष्टितमि'त्यादि ।

एकशिष्टपदं वाक्यं वृत्ता(र्थे ? र्धे) न प्रयुज्यते ।

यथा —

"जयन्ति ताण्डवे शम्भोर्भङ्गुराङ्गुलिकोटयः ।
कृष्णस्य च कराश्चक्रांशुकपिशत्विषः (?) ॥"

अनेन विशिष्टं पदं प्रयोज्यमिति गम्यते ।

अर्धपादेऽन्तयोर्नित्यं समासकृतपूरणम् ॥

अनेन समासस्यैकपद्यमैकस्वर्यं चैकविभक्तित्वं चेति प्रयोजनमिति समस्तानामैकपद्येऽपि प्रथमतृतीयपादयोरन्ते समासस्यापरिपूरणं सह्यमित्युक्तं भवति ।

यथा व्यलगनम् ।

"विशङ्कटकुटीरकस्थलीमुखरस्खलत्स्खलितमेखलाकुलाः (?) ।"
"भवनानि तुङ्गतपनीयसङ्क्रमक्रमणक्वणन्मुखरनूपुराः स्त्रियः ॥"

हस्तिमल्लप्रबन्धादिषु पादान्ते पदापूरणं विपुला(द्या ? र्या) लक्षणानुसारेण यथा —

"अणिअदनुए उण पिए मुद्धा खु सि जेणदाणिए मेहे ।
सिविणअदस्सणदातस्स कदे सोअस्समुव्वहसि ॥"

यद्वा —

"हं तक्खो राआहं तव्वोराणअत्ति जंपेइ"

इत्यादि ।

अर्धान्ते समासापूरणं यथा —

"किञ्च बहुझल्लरीभेरीडिण्डिमपडवजअघण्टा ।
भंभा(मंदभ)मद्दळकाहळहुडुक्कडक्काविरावेण ॥"

यद्वा —

"एलालवङ्गलवलीखरबुसकच्छोरबालकङ्केली ।
कुङ्कुमकुसुम्भकन्दलकुरण्ड.......सम्बन्धम् ॥"

यद्वा —

"अरविन्दकरण्डालयगुहोदरोदारवाससङ्गमहा ।
कालहाडम्बरडीभारिलिवरवतुमिअं (?) ॥"

उक्तं च—

"यतिः सर्वत्र पादान्ते व्यक्ताव्यक्तविभक्तिके ॥"

इति।

**क्वचित् पदस्य मध्येऽपि सर्वत्रादौ यतिर्भवेत्।**
**यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥**

यथा—

"पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशौ" इति।

अत्र प्रत्युदाहरणं यथा—"एकस्या गण्डतलमलं गाहते चन्द्रकक्ष्याम्।" इति।

**पूर्वं तावत् स्वरः सन्धौ क्वचिदेव परादिवत्।**

यथा—"जम्भारातीभकुम्भोद्भवमिव दधत" इति।

क्वचित् परादिवद् यथा—"स्कन्धे विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽसूनहार्षीत्।" अज्ञानादेव यथा—"पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रताम्।" इति। अस्य हि स्वरस्य पदादिवद् भवत्येतत् प्रायेण विभक्तिसन्धौ द्रष्टव्यम्। अत्रापि पूर्वापरभागयोरेकवर्णत्वं दुष्यति "तस्या वक्त्राब्जमपजितपूर्णेन्दुशोभाविलासमि"ति।

**सर्वत्र यतिचिन्तायां यणादेशः परादिवत्।**

यथा—'स पल्वलोत्तीर्णवराहयूथानी'त्यादि।

**नित्यं प्राक्पदसम्बन्धाश्चादयश्च पदान्तवत्।**

इति। अपूर्वं यदि न का(व्य? र्य)मित्यर्थः। यथा—'स्वादुस्वच्छन्द++++सलिलमिदं प्रीतये कस्य न स्यादि'ति। अन्येषां पूर्वपदान्तवद्भावो मा भूत्। यथा—'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' इति।

**परेण नित्यं सम्बद्धाः प्रादयश्च परादिवत्।**

यथा—'दुःखं मे प्रक्षिपति हृदये दुःसहस्तद्वियोगः' इति। इदं चादीनां प्रादीनामेकाक्षरत्वे कार्यम्। अनेकाक्षरत्वे च चामीकरादिवत्। यथा—

"प्रत्यादेशाऽपिच मधुनो विरचितभ्रूविलासम् ।" यथा — "दूरारूढप्रमोदं हसितमिव परिस्पष्टमासीत् सखीभिः ।"

**पृथ्वीवृत्ते यतेर्भङ्गः कैश्चित् प्रायेण सह्यते ।**
**यथाशोभं यतिः कार्येत्याहुः काव्यविदो यतः ॥**

यथा — "लभेत सिकतासु तैलमपि यत्नतः पीडयन्" इत्यादि ॥

**न कर्मधारयः कार्यो बहुव्रीहिप्रतीतिदः ।**
**(य ? त)था विपर्ययस्त्याज्य इति सर्वत्र सम्मतम् ॥**
**झटित्यर्थप्रतीतौ स्यादित्याहुः कविपुङ्गवाः ।**

यथा — "येनाकुम्भसीमभवन्यकरिणां यूथैः पयः पिबन्तः (?)"
इति । यद्वा — "अतीर्णशुक्तपुटमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गनाः"
इति । यद्वा — "बिम्बोष्ठं बहु मनुते तुरङ्गवक्त्र" इत्यादि ।

**(न) बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः ।**
**इत्याप्तवचनं प्रायो लङ्घितं कविवर्त्मनि ॥**

यथा — "कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ।"
यद्वा —

"उपवसति वसन्तस्यावसाने मधूक-
द्रवकुसुमकडारच्छायविश्रान्तकान्ताः ।
दद(ति) मुदमिदानीं भूमयः पामराणा-
मविर(त ?)लखलधानक्षोदकोलाहलिन्यः ॥"

इति ॥

**समासान्ते च दृश्येते प्रायशः शतृशानचौ ॥**

क्वचिद् दृश्यत इत्यर्थः । यथा —

"प्रासकार्मुकविभ्राद्भिर्युवभिर्मृष्टकुण्डलैः ॥"

यथाच — "वात्याचक्रविवर्तितभुजरजश्छत्रायमाणा" इति, "बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः" इति च ।

**सम्भाव्यस्य निषेधे (च) द्वौ निषेधावुदाहृतौ ।**

यथा —

"विपाण्डुभिर्म्लानतया पयोधरैश्च्युताचिराभा गुणहेमदामभिः ।
इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते ॥"
"न नर्मसाचिव्यमकारि नेन्दुना ।"

**विशेषणेन संसिद्धौ विशेष्यं न क्वचित् कृतम् ।**

यथा —

"निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।"

इति ।

**तथा सम्बन्धसम्बन्धे षष्ठी कमलकन्दवत् ।**

यथा — "विमलकमलकन्दच्छेदगौरैर्मयूखैः ।"

**जातिमात्रविवक्षायां लिङ्गेषु स्यादनादरः ।**

यथा — 'मृगक्षीरमि'ति ।

**तथाच लिङ्गनियमः पदानां परिहीयते ।**

यथा — "वत्से! मा बहु निःश्वसीः कुरु सुरागण्डूषमेकं शनैः ।" "गजाय गण्डूषजलं करेणुभिरि"त्यादि । गण्डूषशब्दो न स्त्रियां प्रयुक्त आम्नातोऽपि स्त्रीत्वे ।

**देश्यानामपि शब्दानामनुद्वेगं निवेशनम् ।**

यथा —

"यतो यतोऽङ्गादपयाति कञ्चु(की ? क)-
(मि ? स्त)तस्ततः स्वर्णमरीचिवीचयः ।
यतो यतोऽस्या निपतन्ति दृष्टय-
स्ततस्ततः श्याममरीचिवृष्टयः ॥"

इति । यद्वा —

"किरन्तः कावेरीलडहलहरीजर्जरकणान्" इति ।

**(विताविषिपष्ठेष्टा ? द्वित्वात्रिष्टा च) जातिः स्यात् प्रयुक्ता**
**[प्रायशो बुधैः ।**

"स्तनयोस्तरुणीजनस्ये"ति । प्रायश इति वचनात् क्वचित् न भवति ।

यथा — 'स्त्रीणां चक्षुरि'ति ॥

जेतुरेवारिशब्दाद्यैर्नियता नामकल्पना ।
महाकविप्रयोगेषु निर्वाहः क्वचिदन्यथा ॥

"विहगविधुरमुक्तं लोकमुत्कम्पयन्ती
नवनिबिडजडिम्ना हेमनीस्ताभिमानी (?) ।
जयति परमम(स्तं ? स्त्रं) जैत्रमेकं भवारे-
रधिरजनि जनीनां पूज्यकर्मा कुचोष्मा ॥"

पूर्वमध्योत्तरपदैः प्रकृतिप्रत्ययोभयैः ।
त्यज्यन्ते बहुशः स्वार्थाः समभिव्याहृतेर्बलात् ॥

पूर्वपदार्थत्यागो यथा — "शिशिरशीकरदन्तुरमातुरा" इति ।

प्रत्ययार्थत्यागो यथा — "नवशाड्वलराजिभिरि"ति ।

उभयत्यागो यथा — "ताभ्यां गताभ्यां गतमि"ति ।

भजन्त्यपरमर्थं च शब्दशक्तिस्वभावतः ।

यथा —

"गलितवयसामङ्गे पुंसां प्रसेदुषि मानसे
मदगजसमारोहक्रीडापि देहपरिश्रमः ।
अपि नरपतिप्रार्थ्यश्चूडामणिः शिरसो भरः
कुवलयदृशां कण्ठग्राहो(प्यहोनु)गलग्रहः ॥"

कार्मुकज्यादिशब्दानां प्रयोगोऽभ्युपगम्यते ।
महाकविप्रयुक्तत्वादर्थोत्कर्षोऽस्तु वा नवा ॥

यथा* —

यतः पुरस्तान्निर्देशे तदवश्यं निबध्यते ।

"देवि ! त्वदङ्घ्रिनखराग्रभुवो मयूखाः ॥"

इत्यादि ।

मूर्ध्नि(?) समस्तानां च शब्दानामर्थादाकर्षणं पुनः ।
क्रियादिषु क्रियादीनामारोपश्च यथोचितम् ॥

यथाप्रयोगं द्रष्टव्याः स्वीकर्तव्याश्च पण्डितैः ।

---

* अत्र किञ्चिल्लुप्तमिति प्रतिभाति ।

यथा —

"श्लाघ्यो दृष्टिर्दुहितरि गिरे(?)र्न्यस्तचापैककोट्यां
कृत्वा बाहुं त्रिपुरविजयानन्तरं ते स्थितस्य।
मन्दाराणां मधुसुरभयो वृष्टयः पेतुरार्द्राः
स्वर्गोद्यानभ्रमरवनितादत्तदीर्घानुयात्राः॥"

**असाधवोऽपि स्वीकार्याः शब्दाः शिष्टप्रयोगतः।**
**तेरचक्रोपपेक्षा(त्याः? द्याः) स्वीकार्याः साधवोऽपि न॥**
**ततो हि मुक्त्वा साधुत्वमप्रयुक्तं विनिन्द्यते।**

**रुद्रादीनामेकशेषः**

असन्नपि प्रयोगवशात् स्वीकर्तव्य इति। 'रुद्रौ भगवतामि'ति। अत्र 'पुमान् स्त्रिया' (१. २. ६७) इत्येकशेषे तल्लक्षणश्चेदेव विशेष इत्यधिक्रियते। तत्रैवकारेण स्त्रीपुंसकृत एव विशेषे भवति। रुद्रा(दि? णी)त्यत्र 'पुंयोगादाख्यायाम्' (४. १. ४८) इति (वि)शेषान्तरमप्यस्तीत्येकशेषाभावः प्राप्तः। 'इन्द्र(वरुण)भवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' (४. १. ४९) इत्यनेन सूत्रेणेन्द्रादीनां षण्णामानुगागममात्रं विधीयते। ङीष्प्रत्ययस्तु 'पुंयोगादाख्यायामि'त्यनेनैव भवति।

**(तथा) मार्गात्मनेपदम्।**

यथा — 'मार्गन्ते देहभारा' इति। 'वनगहननिमग्नान्मार्गमाणा' इति च। अत्र 'आधृषाद् वा' (ग० ३. १. २५) इति विकल्पितणिच्को 'मार्ग अन्वेषणे' इति चौरादिको धातुः परस्मैपदी च। तथा शिष्टप्रयोगः — "करकिसलयं धूत्वा धूत्वा विमार्गति वाससी।" इति।

**तिरोऽन्तर्धौ तिरस्कारः**

'अश्रुभिर्यस्तिरस्कृतः'। 'तिरोऽन्तर्धौ' (१. ४. ७१), 'विभाषा कृञि' (१. ४. ७२) इति गतिसंज्ञा। तस्यां हि 'तिरसोऽन्यतरस्याम्' (८. ३. ४२) इति सकारः। यथा — 'लावण्यप्रसरतिरस्कृताङ्गलेखामि'ति। अत्र पुनः परिभवार्थे न प्राप्त इति।

**क्यङ्क्यषौ चिरलादितः।**

यथा — 'विरलविरलायमानमलयमारुत' इति । अत्र 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' (३. १. १२) इति क्यङ् न भवति, विरलशब्दस्य भृशादिष्वपाठात् । 'लोहितादिडाज्भ्यः क्यष्' (३. १. १३) इति क्यषा च न भाव्यं, लोहितादिष्वभावात् । आतित्वेपि प्रचुरयोरभावात् (?) प्रचुर-शब्दो न लोहितादिः । तस्य 'अनुदात्तङित आत्मनेपदम्' (१. ३. १२) इति, 'वा क्यषः' (१. ३. ९०) इति वा आत्मनेपदं च न भवति (?) ।

**बिम्बाधरादिशब्दानामुपमानस्य पूर्वता ।**

यथा — 'बिम्बाधरः पीयते', 'बिम्बाधरासन्नचरं द्विरेफम्' इति च । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२. १. ५६) इत्यनेनाधरबिम्बमिति भाव्यम् । तथाच शिष्टप्रयोगः —

"मदरक्तकपोलानि मधुगन्धीनि योषिताम् ।
विशदाधरबिम्बानि वदनानि पपौ नृपः ॥"

**षष्ठीसमासो निन्द्यस्तः पक्ष्मापिङ्गलिमादिषु ।**

यथा — 'पक्ष्मालीपिङ्गलिम्नः कणलवे'ति । अत्र 'पूरणगुण —' (२. २. ११) इत्यादिसूत्रेण षष्ठीसमासप्रतिषेधः प्राप्तः । *यथा — 'गुणाना-मिह विस्तरः' इति । 'प्रथने वावशब्दे' (३. ३. ३३) इति घञा भाव्यम् ।

**विश्रामविपदवर्णनं । (?)**

यथा —

"तमपि मनुष्यलोकप्रवेशविश्रामशालिनं वाचाम् ।"

अत्र श्रमेरमन्तत्वात् 'मितां ह्रस्वः' (६. ४. ९२) प्राप्तः । एवं 'विरामः शर्वर्या' इत्यादिष्वपि द्रष्टव्यम् ।

**तृणकाष्ठं काष्ठतृणमित्यादौ नियमच्युतिः ।**

यथा — 'सुलभतृणकाष्ठेषु पाथेषु', 'अपि काष्ठतृणं हरेदि'ति च । अत्र लघ्वक्षरं पूर्वं निपततीति तृणकाष्ठमेव प्राप्तमिति ।

**बहु(ल?)त्वं कृमिकीटादौ**

---

* अत्र किञ्चिल्लुप्तमिति प्रतिभाति ।

"कृमिकीटाश्च जीवन्ती"ति । अत्र 'क्षुद्रजन्तवः' (२. ४. ८) इत्येकवद्भावः प्राप्तः ।

अरिहन्त्यादिमिद्धयः ।

अत्र 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (३. २. ८७) इति नियतविषयत्वात् सर्वधातुभ्यः क्विप् इति क्विप् न प्राप्तः ।

अवतारावचययोर्दीर्घव्यत्यासकल्पनम् ।

यथा — 'मलयमारुतावतारतरङ्गध्वजांशुकेष्वि'ति । अत्र 'ऋदोरप्' (३. ३. ५७) इत्यनेनाबेव प्राप्तः । यथा — 'पुष्पावचयसमय' इति । 'हस्तादाने चेरस्तेये' (३. ३. ४०) इति घञ् प्राप्तः ।

तथा भूतविवक्षायां प्रयुक्तोऽनुकरोति च ।

यथा — 'अनुकरोति भगवतो नारायणस्ये'ति । षष्ठ्यप्यत्र चिन्तनीया ।

न(दीष्विडिज ? ङीप् च श)बलादिभ्यः

यथा —

"उपस्रोतः स्वस्थस्थितमहिषगोवर्गशबलाः
स्रवन्तीनां जाताः प्रमुदितविहङ्गास्तटभुवः ।"

अत्र 'अन्यतो ङीप्' (४. १. ४०) इत्यनेन ङीषेव प्राप्तः ।

नीलानि प्राणिनि क्वचित् ।

यथा — 'कुवलयदलनीला कोकिला बालचूते' । अत्र 'जानपदकुण्डगोण —' (४. १. ४२) इत्यादिसूत्रेण 'नीलादोषधौ', 'प्राणिनि चे'ति ङीषेव प्राप्तः ।

मनुष्यताविवक्षायामुक्तोऽपि नि [illegible] ।

अपिशब्दात् 'इतो मनुष्यजातेः' (४. १. ६५) इति ङीषोऽपि ग्रहणम् । 'वरतनुरथवा ते नैव दृष्टा प्रिया मे' । मनुष्यताविवक्षा (मूमूर्जनः ? यामूङ् न) कृतः ।

ङीषो यथा—

"मन्दरस्य मदिराक्षि ! पार्श्वतो
निम्ननाभि ! न भवन्ति निम्नगाः ।

वासु ! वासुकिविकर्षणोद्भवा
भामिनीह पदवी विभाव्यते ॥"

विवक्षायाम(नु?)भावो यथा -- 'इतोऽङ्गरागैर्नयनोदबिन्दुभि(र्निमग्न-नाभेः)' इत्यादि ।

ठञोऽपि बाधः कुत्रापि

'एकदण्डी एकदेशी'ति । अत्र 'एकगोपूर्वाट्ठञ् नित्यम्' (५. २. ११८) इति ठञ् प्राप्तः ।

शाश्वतादिर्भवोद्भवः ।

यथा—'शाश्वतं ज्योतिरि'ति । अत्र 'कालाट्ठञ्' (४. ३. ११) इति ठञ् प्राप्तः ।

आदिशब्दाच्छार्वरादि । यथा—'शार्वरस्य तमसो निषिद्धय' इति ।

मुग्धिमादिष्विमनिच् सिद्धः

यथा—'वैदग्ध्यादपि मु(क्ति? ग्धि)मा' इति । अत्रेमनिज् मृग्यः ।

समासो रा(त्र? त्रि) वृत्त(यः? योः)।

यथा—'रात्रिवृत्तमनुयोक्तुमुद्यता' इति । अत्र 'क्तेनाहोरात्रावयवाः' (२. १. ४५) इति समासो न प्राप्तः । रात्रे रात्र्य(न)वयवत्वात् । तथाहि तत्रैतत् प्रत्युदाहरणम्—

"उलूखलैराभरणैः पिशाचीदमभाषत ।
एतत्तु मे दिवा नृत्तं रात्रौ नृत्तं + द्रक्ष्यसि ॥"

बहुव्रीहौ सरजसं

"मधु सरजसं मध्येपद्मं पिबन्ति मधुव्रताः" इति । अत्र 'अचतुर-विचतुर—' (५. ४. ७७) इत्यादिसूत्रेण सरजसमित्यव्ययीभाव एव निपातितत्वादत्र न प्राप्तम् ।

ग्रहिलेत्यादिसिद्धयः ।

यथा—

"इतश्चेतश्चाभ्रंलिहलहरिहेलाविलुलित-
क्षिती तीव्रग्रासैकग्रहिलमिति पोतः पतिरपाम् (?) ।"

इति । अत्र लश्चिन्त्यः । आदिशब्दान्मदावलादयः । किञ्च आदित्यदर्शनः, हिमवच्छ्रावः, कृष्णसर्पः, लोहितजालिः, प्रासादपतित इत्यादीनां शास्त्रानुमतौ सत्यामप्यप्रयोगादप्रयोगः ।

इति प्रयोगवशतः स्वीकर्त्तव्याः न प्रश्वद्धृद्वाभिः (?) ।

अनेन प्रपञ्चेन प्रयोगस्यैव प्राबल्यं प्रकटितम् । अत्र प्रकरणे यन्निषिद्धं, तदप्रयुक्तदोषस्थाने द्रष्टव्यम् । यत् (प्रसूतं ? प्रतिप्रसूतं) तद्वैशेषिकगुण-स्थाने निक्षेप्तव्यामिति रहस्यम् । ननु साधुत्यप्रयोगे हेयम् । असाध्वपि प्रयोगे सत्युपादेयमित्युक्तम् । किमिदं प्रयोगवृत्तेः साधुत्वं नाम । स्यादेतत् । प्रयोग एव चेत् साधुत्वं, म्लेच्छप्रयुक्तानां गव्यादीनामपि प्रसज्यते । म्लेच्छप्रयोगस्य विशिष्टकालावच्छिन्नत्वात् ततः प्रागरादप्रयुक्तानामेषामपभ्रष्टत्वं प्राचाम ?-शब्दस्त्ववाच(को न) सुशब्द इति साम्प्रतम् । नहि नीलं किञ्चित् प्रत्यनील भवति । कालक्रमेण वर्णपदवदिदमवपद्यत इत्यपि न । अविकारिणो नित्यस्य विकुर्वाणं विरुद्धधर्मदर्शनप्रमितभेदं वस्तु न दृ(ष्टान्तः ? ष्टम्) । तत् कदाचित् क्वचिल्लालाद्युपहतैः पुरुषैरन्यथोच्चार्यन्ते, तेऽपभ्रंशाः ते पुनर्व्युत्पन्नानां स्वय-मवाचका अपि स्वप्रकृतिभूतसदृशसुशब्दस्मारणात् तदर्थमि(यं ? मे) जनयेयुः । ये बालास्तत्रैव प्रथमे व्यवहारे व्युत्पाद्यन्ते, तेषामेषु वाचकत्वाभिमानः । एवं तन्मूलानामपि । अत्रोक्तम् —

"अनिदम्प्रथमाः शब्दाः साधवः परिकीर्तिताः ।
त एव शक्तिवैकल्यप्रमादालसतादिभिः ॥
अन्यथोच्चारिताः पुम्भिरपशब्दा उदीरिताः ।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः ॥"

इति । अनादिरपभ्रष्टता साधुतेत्युक्तम् । उच्यते । अनादौ प्रभवति महति संसारे वषट्शब्दप्रयोगाणामप्यनादित्वादपभ्रंशानामिदम्प्रथमा सा निर्धार-यितुं न शक्यते । शास्त्रपरम्परानुशिष्टानामनादिः प्रयोगो निर्धार्यते, नान्येषा-मिति चेत्, तस्मिन् शास्त्रानुशिष्टत्वमेव साधुत्वमङ्गीकर्तव्यम् । किमन्येन । किञ्च, अयं हि प्रयोगस्य विषयः — चत्वारो वेदाः ऋग्यजुःसामाथर्वलक्षणाः । तत्र ऋग्वेद एकविंशतिधा भिन्नः, एकशतं यजुःशाखाः, सहस्रवर्त्मा सामवेदः,

नवधा अथर्वणो वेदः, षडङ्गानि, मीमांसा, न्यायविस्तरः, अष्टादश पुराणानि, अष्टादश स्मृतयः, अनन्ता उपस्मृतयः, भारतरामायणादिरितिहासः, आयुर्वेदो धनुर्वेदो गान्धर्ववेदः अर्थशास्त्रं कामशास्त्रं काव्यानि नाटकानि च। अत्र ये प्रयुज्यन्ते, न ते सर्वेऽपि साधवो व्यवहाराः। तथाहि—वेदे तावत् 'मध्ये अपसव्य तिष्ठन्ती'ति।

अङ्गेषु व्याकरणे—'जनिकर्तुः प्रकृतिः' (१. ४. ३०) 'तत्प्रयोजको हेतुश्च' (१. ४. ५५) इत्यादि।

वार्त्तिककारस्यापि—वदन् हेहलग्रहणस्य जातिवाचकत्वात् सिद्ध-मिति तथा तथास्य भाव्यं तु कालशब्दव्यवायादिति।

किञ्च भाष्यकारस्याविरविकन्याये स्त्येदि(?)।

ज्योतिषे—'मकरे दशभागायाः सङ्क्रन्हं त्यजेदि'त्यादि।

निरुक्ते—'ब्राह्मणवद् ब्राह्मणादि'त्यादि।

छन्दोविचितौ—'स्वरार्थं चार्यार्थं प्रत्यूषे ब्रह्म चिन्तयेत्'।

कल्पसूत्रादिषु—'अवसमानमितरज्योतिष्टोमेन समानमितरवैकाहिकेन बहिष्पवमाने सदसिस्तु वीरान् प्रत्यसित्वा प्रायश्चित्तं जुहुयात्। आज्येनाक्षिणी आज्यं मूर्धन्यादि एजिघ्राण'(?) इत्यादि।

मीमांसायां—'गव्यस्य च तदादिषु' 'दावोस्तथेति (?) चे'त्यादि।

न्याये—'प्रमाणानुग्राहकस्तर्कः', 'साधनाव्यापका, साध्यसमा व्याप्तिरुपाधि'रिति।

पुराणे—'भूतादिना नभः सोऽपि महता परिवेष्टितः'।

स्मृतौ—'ज्ञाताः सन्ति मे न्याकेति।'

उपस्मृतौ—'पितृणां नृत्यते गणः।'

इतिहासे—

'अस्मिन् क्षणे प्रियशतानि विसर्जयित्वा
पूर्णाः सकमफलगताः(?) प्रयन्ति' 'प्रदीयतां दाशरथाय मैथिली'

"भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना।"

आयुर्वेदे—

"षड् द्रव्यान् षड्रसेषूक्तान् पयसा सह योजयेत्।"

धनुर्वेदे —

"यस्मिन् प्रदेशिनीवर्जैश्चतुर्भिर्वीतमङ्गुलैः ।
तथा गुणेषु कर्तव्यो नीचैर्नीचैरथाविभा ॥" (?)

गान्धर्ववेदे— 'गात्रमुन्नाम्य रेचयेत् ॥'

अर्थशास्त्रे — 'राजानमनूत्तिष्ठन्ते प्रजाः प्रमाद्यन्तमनुप्रमाद्यन्ति' । अपिच (युगपदुभाभ्यां ताभ्यां यो य प्रहा स उभाभ्य इति सर्वैः प्रपालकाव्यररराजपुत्रादिभिः?) प्रयुक्तम् ।

कामशास्त्रे — 'न निर्गुणमपि चाकाङ्क्षेत' ।

काव्ये —

"+तायाः प्रचकाराशौ काकुत्स्थादतिशङ्कितः ।"
"चिन्ताकुड्मलित(स्य) कैटभरिपोर्भोगतयः पान्तु वः ॥"

उक्तं हि —

"वेदेष्वपि प्रयोगास्ते भूयांसोऽप्यतृसम्मताः ।
सामान्ये छान्दसं वापि येषां नास्त्येव लक्षणम् ॥
ये च व्याकरणस्यैव परं पारं व्यवस्थिताः ।
सुतरां तेऽपि गाव्यादिशब्दानेव प्रयुञ्जते ॥
सूत्रवार्त्तिकभाष्येषु दृश्यते चापशब्दनम् ।
अश्वारूढाः कथं चाश्वान् विस्मरेयुः सचेतसः ॥
येषामनुगमो नास्ति ते सिध्येयुर्निपातनैः ।
अन्यथानुगतो नानुप्रयोगं बाधते स्मृतिः ॥
स्मृत्याचारविरोधेऽपि स्मृतिरेव बलीयसी ।
प्रत्यक्षप्रतिषेधाच्च जनिकर्त्रन्यसाधुता ॥
प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते ।
देशान्तरस्थितः शब्दो लक्ष्यभूतोऽन्यशब्दवत् ॥
कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः ।
शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः ॥
अन्तो नास्त्यपशब्दानामितिहासपुराणयोः ।
ततो भाष्यादिशब्दानां हस्तिशिक्षादिकारिणाम् (?) ॥"

इति ।' अत्र छान्दसानि वेदस्वातन्त्र्येण, आर्षाणि 'छन्दोवदृषयः कुर्वन्ती'ति ऋषीणां तेजोविशेषेण, गान्धर्वाद्यनुबन्धनानि भरतादीनामनभिहितसंहितावाचकानामर्थप्रकाशमात्रतात्पर्येण, काव्योद्भवानि कवीनां निरङ्कुशानां रसैकतानतया च (पराजितानि ? परश्शतानि) प्रयुक्तान्यप्यशिष्टसाधूनि व्यवहृतिषु दुष्यन्ति । तस्मात् प्रयोगादन्यत् साधुत्वमिति मन्तव्यम् । का तर्ह्यपरा साधुता नाम । शास्त्रव्यञ्जनीया कापि जातिरिति ब्रूमः । यथागस्त्यबुधपुटादिसंस्कारसहकृते चेतसि परीक्षकाणां रत्नतत्त्वं, तथा व्याक्रियाविदुषां हृदि शब्दानां साधुत्वं परिस्फुरति । उक्तं हि—

"यथा च पद्मरागादीन् काचस्फटिकमिश्रितान् ।
परीक्षका वि(मु ? वि)ञ्चन्ति साधुत्वमपि मे तथा ॥"

केचिदेवमाहुः — अभ्युदयनिमित्तं साधुत्वम् । तदपि व्याकरणपरम्परया (स)मुन्नीयत इति । एतन्मतमपि शास्त्रश्रवणसापेक्षत्वादस्मद्राद्धान्तमनुसरति । तत्राहुः —

"अनपभ्रष्टतानादिर्यद्वाभ्युदयहेतुता ।
व्याक्रियाव्यञ्जनीया वा जातिः कापीह साधुता ॥"

इति । ननु प्रयोगो न प्रयोगस्य कारणमिति प्रदर्शितम् । कथमुक्तमसाध्वपि प्रयोगे सत्युपादेयमिति । उच्यते । प्रयोगो नाम शिष्टप्रयोगो विवक्षितः । उक्तं हि —

"असाधवोऽपि स्वीकार्याः शब्दाः शिष्टप्रयोगतः ।"

इति । शिष्टप्रयोगः शिष्टानां प्रयोगः । अनेन क्वाचित्कः कविप्रयोगो न प्रमाणमिति यावत् । शिष्टा बाणकालिदासादयः । पराशरव्यासवाल्मीकिप्रभृतीनां शिष्टत्वेऽपि स्वातन्त्र्यातिशयेन परमेश्वरस्य ब्रह्मशिरःकर्तनाद्याचारवत् न तत्प्रयोगोऽनुसरणीयः ।

"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ।"

इति । तस्मात् काव्येषु प्रयुक्ता एव निबन्धनीयाः । अन्यत्र क्रत्वर्थेषु व्यवहारेषु साधव एव प्रयोक्तव्याः । 'साधुभिरेव भाषितव्यमि'ति नियमात् । लौकिकेषूभयेऽप्यादरणीयाः, तेषां काव्यव्यवहारात्मकत्वादिति निर्णयः ।

किञ्च —

**प्रबन्धेषूचिताञ्छब्दान् कुर्यादामन्त्रणादिषु ।**

यथा — 'भगवन्! अभूमिरेषा शापस्ये'ति ।

यद्वा — 'अय्य! आणवेहि' इति । उक्तं हि —

"भगवन्निति सम्बोध्यो देवस्तत्प्रतिमोऽपि वा ।
आर्येति वृद्धो विधिवन्महाराजेति पार्थिवः ॥
उपाध्यायेति विद्यादो गुरुराचार्य इत्यपि ।
नाट्ये भावेति विदुरः किञ्चिदूनस्तु मारिषः ॥
समानोऽथ वयस्येति हंहो हंहेति चाधमः ।
राज्ञा विदूषकोऽप्येवं वयस्येत्यभिभाष्यते ॥
आयुष्मन्निति सूताद्यैर्भूष्णुर्नित्यं तपस्विभिः ।
स्वामिनस्तनयः श्लाघ्यः कुमारो भर्तृदारकः ॥
सौम्यभद्रमुखाश्चैव देवानां प्रिय इत्यपि ।
सम्बोध्याः शाक्यनिर्ग्रन्था भदन्तेति प्रयोक्तृभिः ॥
देवेति नृपतिर्वाच्यो भट्टेति च महानृपः ।
सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने ॥
अन्यथा पुनरार्येति तद्वज्ज्येष्ठोऽनुजन्मना ।
छन्दतो नामभिर्वाच्या ब्राह्मणैः क्षत्रिया अपि ॥
राजन्निति स्यादृषिभिः क्वचित् सम्बोधनं पुनः ।
कैश्चित् स्वपूज्यपादानां साक्षान्नाम न गृह्यते ॥
हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ।
अज्जुकेति च वक्तव्या वेश्या परिजनैः स्वकैः ॥
अत्तेति तस्या धात्र्यादिररे रे इति नीचकः ।
बहुत्वसङ्ख्याप्याख्या स्यात् पूज्ये स्वात्मनि वा पुनः ॥
पादमिश्रादयः शब्दाः पूज्यनामान्ततः स्मृताः ।
पर्यायश्च प्रयोक्तव्यो यथास्वमुचितेष्वपि ॥
हृष्टाभिः पतयः स्त्रीभिर्भाष्याः शब्दैः प्रियादिभिः ।
दुश्शीलादिभिरन्यत्र कथ्यन्ते तु यथाक्रमम् ॥
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम् ।
नन्दनश्चेत्यभिप्रीतौ वचनानि भवन्ति हि ॥

दुश्शीलोऽथ दुराचारः शठो वामो विरूपकः ।
निर्लज्जो निष्ठुरप्रायः क्रोधे प्रायोऽभिधीयते ॥
द्विजस्य नाम शर्मान्तं वर्मान्तं क्षत्रियस्य च ।
गुप्तान्तं वणिजः प्रायो दासान्तं वृषलस्य च ॥
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ।
नानाकुसुमनामानि प्रेष्यवर्गे चकासति ॥
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ।
गम्भीरार्थानि नामानि योजयेदुत्तमेषु च ॥
एवं शब्दस्य सन्दर्भः काव्येष्वौचित्यमावहेत् ।"

इति ।

**अर्थानुवर्णनं कार्यं देशवृत्ताद्यपेक्षया ।**
**मगधेषु स्तनौ पीनौ**

यथा —
"कलशैरभिषिच्य काञ्चनैस्तं मगधीपीनपयोधरोपमानैः"

**कलिङ्गेष्वाक्षिणी शुभे ॥**

यथा — "कलिङ्गपुरकामिनीनयनकान्तिकर्णेजपैः ।"

**बाहू प्रलम्बावङ्गेषु**

यथा — "अङ्गाधिराजभुजदण्डसमैश्च सालैः ।"

**वङ्गेषु चरणौ मृदू ।**

यथा — "वङ्गाङ्गनाचरणपल्लवकोमलानि ।"

**वर्ण्यन्ते केरलान्ध्रीणां चित्राश्चिकुरभङ्गयः ।**

"केरलीचिकुरभाङ्गिभङ्गुरं सारणीषु पुनरम्बु दृश्यते ।"
"स्नानस्निग्धान्ध्रनारीचिकुरविरचनामेचकैरम्बुवाहैः ।"

**पञ्चालेष्वधरस्ताम्रः**

"अधि अभितानिकधूसरेभ्यो
+गर्भताम्बूलरसारुणेभ्यः ।
पश्यन् श्रियः कर्षति काञ्चनारं
पञ्चालनारीदशनच्छदेभ्यः ॥" (?)

**नाभिर्लाटमृगीदृशाम् ।**

"लाटीनाभिनिभं चकास्ति च पतद्वृत्ताग्रतः केसरः ।"

**दाक्षिणात्यवधूनां तु मृष्टा दन्तेषु वर्ण्यताम्(?) ।**

यथा — "सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युतिः ।"

**व्याधवल्लवनारीणां तथा हालिकयोषिताम् ।**
**अन्यासां पामरीणां च प्रायेण स्तनवर्णनम् ॥**

'व्यामग्राह्यस्तनीभिः शबरयुवतिभिरि''ति ।

"सबन्धनावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम वल्ल(री ? वी)-
रभिप्रवृत्ता इव वारयोषितः ॥"

"परिहरति सुषुप्तं हालिकद्वन्द्वमारात्
कुचकलशमहोष्माबद्धरेखस्तुषारः ।"

"यच्चेदं हालिनीकुचोष्मसु हिमम्"

"दिनपरिणतिमज्जत्पामरीपीनतुङ्ग-
स्तनतरलितवद्धासन्नतोयास्तटिन्यः ।"

**द्रमिला मुरलास्तद्वद् बर्बराः काशिकोसलाः ।**
**पुलिन्दा दाक्षिणात्याश्च प्रायेण ह्यसिताः स्मृताः ॥**

"इह हि वहति कामं कामकोदण्डयष्टि-
द्रमिडयुवतिगण्डश्यामिकां कोशकारः ।"

"अथैष प्राचीनः सरति मुरलीगण्डमलिन-
स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तनिचयः ।"

एवमन्येऽपि द्रष्टव्याः । अत्र केचित् कथयन्ति —

**पञ्चालाः शूरसेनाश्च सघपा ओड्रमागधाः ।**
**अङ्गा वङ्गाः कलिङ्गाश्च श्यामाः प्रायेण वर्णिताः ॥**
**शकाङ्गना यवन्यश्च हूणनार्यश्च पाण्डुराः ।**

"शकयुवतिकपोलापाण्डुने''ति ।

"मदनदूनयवनचिरण्टिकागण्डपाण्डराणि ताम्बूलीदलानि ।"

"उद्गर्भहूणरमणीरमणोपमर्दभुग्नोन्नतस्तनविलासनिभं हिमांशोः।"

इति। अत्र कैश्चित् केरलाश्च कथ्यन्ते। यथा—

"गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदैस्ताम्बूलीपटलैः।" इति।

**बाल्हीकाश्च महाराष्ट्रा मालवाः पल्लवादयः।**
**प्रायेण पाटला वर्ण्या ये श्रिता दिशमुत्तराम्॥**

"बाल्हीकीरदनच्छदारुणदलैः फुल्लैरशोकोऽञ्चितः।"

"हठारितं महाराष्ट्रे दशनच्छदपाटलाः।"

"अथ मधुमदवल्लरीकपोलतलकोमलातप।" इति।

अन्यच्च द्रष्टव्यम्।

**नीचानामथ नीलत्वमुत्तमानां च गौरता।**

सर्वत्र व्यापकमेतत्। गौर(ते)त्यनेन सितपीतरक्तास्त्रयोऽपि गृह्यन्ते। यथामरसिंहः—'गौरोऽरुणे सिते पीत' इति। तथाच प्रयोगाः—'मूर्ध्नि स्फुरत्तुहिन' इति। "कर्णिकारगौरेण विद्धकञ्चुकच्छन्नवपुषा"। 'यस्मिन् मनागपि नवाम्बुजपत्रगौरमि'ति। एवमन्यदपि यथाप्रयोगमनुसर्तव्यम्।

**ग्राम्योपनागरिकयोस्तद्वन्नागरिकस्य (च)। (कीर्तनम्।?)**
**विदध्याद् वर्णनं प्राज्ञो वेषभाषादिचेष्टितैः॥**
**कन्थाभिः कम्बलैः स्थूलैर्वस्त्रैः पुष्पैस्तथाविधैः।**
**बालकोशीरकचोरहरिद्राकन्दरोचनैः॥**
**वेषः स्यात् प्रकृतिस्थैस्तु वचोभिर्भाषणं भवेत्।**
**भवन्ति हासयोग्याश्च चेष्टा ग्राम्येषु भूयशः॥**
**वस्त्रं सूक्ष्मं मनोज्ञानि माल्यानि हरिचन्दनम्।**
**कोमलं भाषितं च स्याच्चेष्टाश्च निपुणक्रमाः॥**
**उन्नेयाः प्रायशो ह्येवमुपनागरिके जनाः।**
**श्लक्ष्णं वासोऽमलं क्षौमं कौशेयं राङ्कवं मृदु॥**
**कार्पासं वा भवेन्माल्यं मालतीचम्पकादिभिः।**
**कुङ्कुमागरुकस्तूरीघनसारादिलेपनम्॥**
**वक्रोक्तिसुन्दरं वाक्यं चमत्कारि च चेष्टितम्।**
**भावहार्यमिदं सर्वं भवेन्नागरिके जने॥**

**तत्तद्योग्यं भवेद् वर्ण्यं कविभिर्भूषणादिकम्।**
**यथा सहृदयाह्लादो भवेद् विच्छित्तिभेदतः॥**

तत्र वस्त्रमाल्याभरणादिजनितो वेषः। प्रकृतिस्थकोमलकठोराणि भाषितानि। हास्यनिपुणचमत्कारीणि चेष्टितानि। ग्राम्यस्य वर्णने त्वक्फलकृमिरोमजेषु वस्त्रेषु स्थूलानि। यथा —

"कन्थाकम्बलखण्डकल्पितशिरस्त्राणद्वयः कर्पटी-
च्छन्नाङ्गः सकृदाशितंभवरुचित्यक्तप्रभाताशनः।
हेमन्ते हिमधूसरेऽप्यनुदिनं वैपादिकोदुम्बर-
क्षीराभ्यासनितान्तकर्कशपदः पान्थः सुखं गच्छति॥"

वालकोशीरकच्चोलहरिद्राभिः स्थूलकन्दैरनुलेपः। यथा —

"क्रीडन्तीनां हलिकसुदृशामार्पितोशीरलेपै-
रङ्गैरन्तर्नवदमनकोद्गन्धिभिः केशबन्धैः।
वस्त्रैश्चार्द्रक्रमुकसुभगैः शालिखण्डावघात-
स्फारोन्मेषे भवति भवने सम्भृतः कोऽपि गन्धः॥"

यद्वा —

"व्रीहिः स्तम्बकरिः प्रभूतपयसः प्रत्यागता धेनवः
प्रत्युज्जीवितमिक्षुणा भृशमिति ध्यायन्नपेतान्यधीः।
सान्द्रोशीरकुटुम्बिनीस्तनभरव्यासक्तघर्मक्लमो
देवे तीरमुदारमुज्झति सुखं शेते हलिग्रामणीः॥"

प्रकृतिस्थानि भाषितानि (स्वभावो)क्तय इत्यर्थः।

"भद्रं ते सदृशं यदध्वगशतैः कीर्त्तिस्तवोद्घुष्यते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः।
इत्यालोच्य चिरं दृशा करुणया शीतातुरेण स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः॥"

हास्यं चेष्टितं यथा —

"धावति तरुमारोहति शकटमुद्वहति सौधणेति।
गायति कुविटः परयोषितं दृष्ट्वा॥" (?)

इति। यथा —

"गलनिहितकुसुममालश्चन्दनचर्चार्चितः सनिद्रावः।
भट्टः प्रविशति हृष्टः कुटीरकं भ्रष्टकुट्टन्याः॥"

उपनागरिकवर्णने सूक्ष्माणि वासांसि । यथा —

"आ अं बले अणाणय्योळ्ळस्सु अपअडो रुजघणाणं ।
ओअंसुअपा अडो रुजहा हणोणंअ अप इह मंजरी ॥
कणं कण्णकामो धणुव्वहइ ··· ··· ··· ··· ··· ।" (?)

शोभाप्र(दा)नि माल्यानि । यथा —

"शुचौ तप्ताङ्गीनां बहलमकरन्दद्रवमुचः
कदम्बप्रालम्बाः स्तनपरिसरे पक्ष्मलदृशाम् ।
हठाल्लूनोष्माणः कमपि महिमानं विदधते
जलक्रीडोत्तीर्णप्रियतमभुजाबन्धशिशिराः ॥"

चन्दनप्रभृतिभिः कर्ण्डैरनुलेपो यथा —

"एतस्मिन् घनचन्दनार्द्रवपुषो निद्राकषायेक्षणा
लीलालोलमृ(दुल ? दूल्ल)सद्भुजलता व्याजृम्भमाणा मुहुः
निर्गच्छन्ति शनैरहःपरिणतौ सुप्ता लतामन्दिरात्
स्वेदाम्भःकणदन्तुरस्तनतटाभोगाः कुरङ्गीदृशः ॥"

कोमलानि भाषितानि अलङ्कारोक्तय इति यावत् । यथा —

"अनञ्जितासिता दृष्टिः (भ्रूरता ? भ्रूरना)वार्जितानता ।
अरञ्जितारुणश्चायमधरस्तव सुन्दरि ! ॥"

निपुणं चेष्टितं 'कश्चित् कराभ्यामि'त्यादि ।

नागरिकवर्णने सूक्ष्माणि वासांसि । यथा —

"अथास्य रत्नग्रथितोत्तरीय-
मेकान्तपाण्डुस्तनलम्बिहारम् ।
निःश्वासहार्यांशुकमाससाद
घर्मः प्रियावेषमिवोपदेष्टुम् ॥"

विचित्राणि च सुरभीणि कुसुमानि । यथा —

"माला मूर्ध्नि विनिर्मिता कुवलयैः कर्णे कृतं कैरवं
सीमन्ते नवबन्धुजीवकुसुमं राजीवदामोरसि ।
वक्त्रे चन्दनबिन्दुरिन्दुधवलं वालं मृणालाङ्कुरे
वेषः पक्ष्मलचक्षुषामयमहो यूनां मनः कर्षति ॥"

कस्तूरीकुङ्कुमादिभिः स्निग्धद्रवैरनुलेपः । यथा —

"डोलायन्तः कपोलेषु कस्तूरीपत्रबन्धुषु ।
अलकानलकास्त्रीणां पपुः कैलासमारुताः ॥"

यद्वा —

"घर्माम्भोविसरविवर्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम् ।
तत् प्रातर्विहितविचित्रपत्रलेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥"

कठोराणि (?) भाषितानि वक्रोक्तय इति यावत् ।

"मुग्धेऽस्मिन् परिणाहिनि स्तनतटे मुक्ताकलापो वसन्
दिष्ट्या न स्मरति स्वजन्मवसतिं कुम्भस्थलीं दन्तिनः ।
इत्थं केलिभुजङ्गनर्मवचसा (ज्यो ? द्यो)ति स्मितज्योत्स्नया
सव्रीलं मुखमातनोति सुतनुश्छन्नांशुकं स्वेच्छया ॥"

यद्वा —

"यदियदेव विलग्नं वक्षश्चैतावदेतावत् ।
वपुरीदृशी (मृगदृस्यावदरुचरुचकोयमारम्भः ?) ॥"

चमत्कारि चेष्टितं यथा — "विलासिनीविभ्रमदन्तपत्रमि"त्यादि । यद्वा, "चक्रवाकमिथुनं निरष्ठीवमि"त्यादि ।

**आवन्त्या दाक्षिणात्या च पौरस्त्या चोड्रमागधी ।**
**एताः प्रवृत्तयः स्थाप्या यथान्यायं यथोचितम् ॥**

आवन्त्या यथा —

"पाञ्चालनेपथ्यविधिर्नराणां स्त्रीणां पुनर्नन्दतु दाक्षिणात्यः ।
वन्दामहे वन्द्यतमं पुनस्तमन्योन्यसम्भिन्नमवन्तिदेशे ॥"

दाक्षिणात्या यथा —

"केशाः सपुष्पगण्डूषा जघने मणिमेखला ।
हारो रक्तांशुकं भद्रं वेषः स्यादान्ध्रयोषिताम् ॥"

"मुखं पातुं फालस्थलनिहितकर्पूरतिलकं
ग्रहीतुं वा केशान् नवकुसुमगण्डूषसुभगान् ।
स्थनायं विन्यस्तप्रचलितजलार्द्रापरिचितौ
न च स्पष्टं शक्यं सुकृतरहितैरान्ध्रसुदृशाम् (?) ॥"

यद्वा,

"यन्नीला(ल)क्रमञ्जनं अमरक! स्कन्धस्य यद् बन्धनं
वैचित्री रचना कचेषु कुसुमैर्यच्चोलवामभ्रुवाम् ।
रोचन्ते न च तानि कुन्तलवधूसीमन्तसीमान्तर-
स्फायत्कुङ्कुमकेसरप्रणयिने पुण्याय तच्चक्षुषे ॥"

पौरस्त्या यथा —

"ताटङ्कवल्गिततरङ्गितगण्डलेख-
मानाभिलम्बिदरदोलिततारहारम् ।
आश्रोणिगुल्फपरिमण्डलितोत्तरीयं
वेषं नमस्यत महोदयसुन्दरीणाम् ॥"

उड्रमागधी यथा —

"आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः
सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः ।
दूर्वाप्रवालरुचिरास्वगुरूपभोगाद्
गौडाङ्गनासु चिरमेष चकास्ति वेषः ॥"

**क्रीडामहिम्न्यो देश्याश्च निवेश्यन्तां यथोचितम् ।**
**द्यूतान्दोलनकौमुद्यो यक्षरात्रिस्मरोत्सवौ ॥**
**सुवसन्तकमुख्याश्च महिम्न्यः परिकीर्तिताः ।**
**द्यूतं दुरोदराद्या स्याच्चुम्बनादिपणा क्रिया ॥**

आलिङ्गनादिग्लहं दुरोदरादि क्रीडा । द्यूतं यथा —

"गाढालिङ्गनकेलिपूर्वममुना द्यूते जितं चुम्बनं
दत्तं तत् परिरभ्य किञ्चिदनया प्रत्यर्पितं चामुना ।
नैतत् तादृगिदं च तादृशमिति प्रत्यर्पणप्रक्रमै-
र्यूनोश्चुम्बनमेकमेव शतधा रात्रिर्गता गृह्णतोः ॥"

यद्वा,

"कोऽयं भामिनि! भूषणं कितव! ते शोणः कथं कुङ्कुमात्
कूर्पासान्तरितः प्रियेऽपि नियमः पश्यापरं कान्ति मे।
पश्यामीत्यभिधाय सान्द्र(पुलको) मृद्नन् मृडान्याः स्तनौ
हस्तेन प्रतिनिर्जितेन्दुरमलाद् धृते हसन् (यो ? वो) हरः॥"

**डोलामारुह्य मार्गादौ विहारो डोलनं भवेत्।**

मार्गशीर्षाद्यादिषु डोलामारुह्य विहार आन्दोलनक्रीडा। आदिशब्देन चतुर्थ्यादयोऽपि (न लभ्यते ? गृह्यन्ते)।

यथा—

"अन्दोळनळंघिअवअसिहाए दिट्ठे तुमंमि मुद्धाए।
आसंघिज्जइ काउं करपल्लवणिचळा डोळा॥"

**क्रीडाश्वयुक्पौर्णमास्यां रात्रौ स्यात् कौमुदीति च।**

यथा—

"अह तइ महत्थदिण्णो कह कहवि खळंतमत्तजणमज्झे
तिण्णाअणेसु जाओ विळेवणं कसुईवासो॥"

यद्वा,

"घेत्तूण चुण्णमुट्ठी हरिसूससिहाए वेवमाणाए।
मिति मसिणे पिअअमं हत्थे गन्धोदअं जाअम्॥"
"अणेण पिआत्थणए कोमुइवासेण कहमिज्ज एत।
ओहसइ परिसमुण्णं उम्भिअमुहो अळिअइसो॥"

**दीपावल्युत्सवो यत्र रात्रिर्दीपादिहेतुकः।**

"अण्णेविहि होन्ति चणाण उणो दिवाळिआ सरिच्छोदो।
जत्थ जहि छंगमह पिअवसहीदो अवमिलोण॥"
"पहिअअगुणिअं हरन्ति वेडाळत्थणभरं ळीओ।
मअआसवं मि कोसुम्भकचूआमभरणमेत्तओ॥"

**त्रयोदश्यां भवेत् कामदेवपूजामहोत्सवः।**

"कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव॥"

"प्रत्यग्रमज्जनविशेषविमुक्तमूर्ती"त्यादि ।

**भवेद् वसन्तावतारदिवसः सुवसन्तकः ।**

"पग्गुप्पच्छणणंदो सक्केण वि कद्दमपहासण दिण्णं ।
थणअळसमुसहवळेट्टत्तसे असो अं कं वहसि ॥"

"छणपिट्ठधूसरत्थणि ! महुमअतंबच्छि ! वकुळआभरणे ! ।
कण्णकअचूअमञ्जरि ! पुत्ति ! तुए मण्डिओ गामो ॥"

**क्वचित् क्वचिद् भवेच्चूतभञ्जिकाभ्यूषखादिका ।**
**यत्रानङ्गायोपहृत्यावतंस्याच्चूतमञ्जरीम् ॥**
**सा चूतभञ्जिका पक्वशूकधान्यादिखादनम् ।**
**अभ्यूषखादिका चैवं महिम्न्यः परिकीर्तिताः ॥**

यत्राङ्गनाभिश्चूतमञ्जर्योऽवरुज्यानङ्गायोपहृत्यावतंस्यन्ते, सा चूतभञ्जिका । यथा—

"तुंसि मए चूदंकुर ! दिण्णो कामस्स गहिअधणुअस्स ।
पहिअजणजुइवळक्खो पंचब्भहिओ सरो होहि ॥"

"रूपाप्पिताण्ण सोहइरुइजोक्कामिणीणणेणव्वं ।
कण्णेजं णव्वळिज्जइ कपोळे घेळं कपन्थवं सहआरं ॥"

शिम्बिधान्यशूकधान्यानामार्द्राणामेवाग्निपक्वानामभ्यवहारोऽभ्यूषखादिका ।

"वाअणग्गिणाकरोमेदद्धोत्ति पुणो पुणोच्चिअकएइ ।
हेळिअसुआमळिओ सहदोहळिओषमरजआणो ॥"

अत्रेक्षुभक्षिका च द्रष्टव्या ।

"दिअरस्ससरअमहुरं सूमइळेण देई इहत्थेण ।
पळमं हिअअं वहुआ पच्चा गंडं सदं तवणं ॥"

अथ देश्याः—

**उदकक्ष्वेलिका मध्यदेश्यानां भूतमातृका ।**
**विदेहानां विदर्भाणां स्मृता स्यादेकशाल्मली ॥**
**कदम्बयुद्धं पुण्ड्राणां वने स्यान्नवपत्रिका ।**
**प्रायेणानूपदेशेषु प्रथते विसखादिका ॥**

उदकपूर्णा क्ष्वेला वंशनाली यस्यां क्रीडायां सा उदकक्ष्वेलिका । यथा—

"शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः
कौसुम्भं पृथुकुचकुम्भसङ्गि वासः ।
मार्द्वीकं प्रियतमसन्निधानमासन्
नारीणामिति जलकेलिसाधनानि ॥"

**पाञ्चालविहिता भिन्नभाषावेषोपचेष्टितैः ।**
**क्रीडा पाञ्चालानुयानं प्रहासाद्यनुरञ्जितम् ॥**
**तत्रैव मुख्या ख्यातानुकरणी भूतमातृका ।**
**केचित् पाञ्चालानुयानं पाञ्चाल्युद्वाहमूचिरे ॥**

पाञ्चालमुनिप्रवर्तिता भिन्नभाषावेषचेष्टितैः प्रहासक्रीडा पाञ्चालानुयानम् । यस्यानुकरणिका भूतमातृकेति च प्रसिद्धिः ।

"हद्धे हिमं सन्धमिऊण बाळा हुङ्कारवक्कारवेहिलुद्दाणि ।
स अरं णीपाटि सीसणहिं महामसाणाभिणअ (?) क्कुणंति ॥"

"इमा मसीकज्जलकालकालकाआ मिअंडवाचाअ विळासिणीओ ।
पुलिद्दरूवेण जणस्सहासस्समोविप्पिचाभरणा कुणंति ॥"

"कोदुक्क अजणग्गमवेसा वेणुवादणपरा अपारा (?) ।
वेणुतालरवताडिदलोअं ओसरंतिपणमंति हसन्ति ॥"

कापिधारिटकरालड्डुके"त्यादि ।

यद्वा,

"विहलइसेणवच्छन्तममान्तींणा अइमण्डणङ्गइ खलइ ।
भूअच्छणणच्चणम्मि सुहअमाणं पुलो एसु ॥"

पाञ्चालीपरिणयादिप्रवर्तनं पाञ्चालानुयानमिति केचित् । "अनाकूतैरेव प्रियसहचरीणां शिशुतया वचोभिरि"त्यादि ।

**पुष्पितं शाल्मलीवृक्षमाश्रितैः स्थगितेक्षणैः ।**
**स्त्रीजनैरस्य चेष्टैर्वा क्रीडा स्यादेकशाल्मली ॥**

एकमेव कुसुमनिर्भरं शाल्मलीवृक्षमाश्रित्य सुनिमीलितकादिभिः क्रीडतां क्रीडा एकशाल्मली ।

"को एसोत्ति पऊतैसामलीं ध्वणि अव्विपरिमुसइ ।
अळिअसुअम्मुद्धबहू सेअजळोळेण हत्थेण ॥"

पुच्छरतस्सविकहेर भग्गाइतेणवाळि जारअं हउज्ज आन आसा मह-वपि ओसेह आसवरारय्ये (?)।

कादम्बनीपहारिद्रकुसुमैः प्रावृडागमे।
क्रीडा कदम्बयुद्धं स्याद् वधूनां वल्लभैः सह॥

वर्षासु कदम्बनीपहरिद्राकुसुमैः प्रहरणभूतैर्द्विधा बलं विभज्य कामिनां क्रीडा कदम्बयुद्धम्। यथा—

"बहिआविहिअसविसज्जिअकळव्वरअहरिअणीणरुओसि।
ओदी सळकळव्वत्थ बओव्वत्थणसरोहाळि असो ह्लए॥"

"छम्मइ पिआए दइओ कळंबवच्छेण मुच्छएदिअरो।
हम्मइ एपि एणपि अपीडा उणसे सवत्तीण॥

धण्णोसि रेहळिद्दहहळि अस आपिणथण भरुच्चं।
गेवत्तस्सविवइणो जन्तुहकुमम[illegible]णिवणइडरि॥"

आद्यवर्षोदिततृणे वर्षासु नवशाद्वले।
या कृत्रिमविवाहादिक्रीडा सा नवपत्रिका॥

प्रथमवर्षप्ररूढनवतृणाङ्कुरासु स्थलीषु शाद्वलमभ्यर्च्य भूभुक्तपीतानां कृत्रिमविवाहादिक्रीडा नवपत्रिका। तत्र वरणविधानादविवेविधाः परिहासा भवन्ति।

"आसण्णकुडुग्गजण्णदेदिडले बहुजु आणसक्कि एण धेरोपलत्तिदारुच-सुपुत्तिदिण्णासि सुग्गामेतारुणह कालभरणं कुरन्तं मिविवेर विवाहस्स जावश अणहप आ रहहेति कुमारी ए अलाइकइआआ आकळआणसिच्च णणचखि आ मादुआवि अकुमारं तं तं जाणइ सव्वं जं महिळा ओ जाणन्ति त्थबहोन्ति सहिओपुत्थि अमारुव सजत्थदिदिण्णासि तत्थविगिणिज्जलीका तत्थविगिरि अवाहिणीगोलो।"

अभ्येत्य या भवेत् क्रीडा सरो नूत्नबिसाङ्कुरम्।
तत्खादनादिका नानारूपा सा बिसखादिका॥

अभिनवबिसाङ्कुरोद्भेदसमये सरः समाश्रित्य नानाक्रीडा बिसखादिका।

यथा—

"गह्वंति णिअअमाणि अ अमाअवअणा णिहे विसळअद्धाइं ।
हिअआइं वि कुसुमाउहसाणकआणेण्णद्धाइं ॥"

द्रष्टव्यानि प्रकीर्णानि चेष्टितानि मनीषिभिः ।
अष्टमीचन्द्रिका कुन्दचतुर्थी च तथाविधा ॥
पुष्पावचायिकेत्यन्या तथा दौहदिकेति च ।
ज्ञेया तथान्या च नवलतिका तत्प्रवर्तिका ॥
शक्रार्चा च तथा तोयक्रीडा च प्रेक्ष्यदर्शनम् ।
मधुपानादिकमिति प्रयोज्यानि यथाविधि ॥
अन्यच्च क्रीडितं तत्तत्स्थानेषु विनियोजयेत् ।

आदिशब्दादुदीयमानादिर्गृह्यते । अष्टमीचन्द्रिकाकुन्दचतुर्थीपुष्पावचायिकादौहदिकानवलतिकाशक्रार्चातोयक्रीडाप्रेक्ष्यदर्शनमधुपानादिप्रकीर्णकान्यपि द्रष्टव्यानीत्यर्थः ।

स्पृहयन्ति मनोभूतमष्टमीशशिनो यया ।
क्रिया चैत्रचतुर्थी सा अष्टमीचन्द्रिका भवेत् ॥

"जहितुमं सच्च विआ णीणिसाळोदिजू आणेहि तेहिं चिअच्चत्तेम अमळउग्गे स अंजाआगहवअळधू आदिण्णं वपळज्जवेहिस्सविसे स एह्रि अणिवारिअमेवगोहणच्च अउउच्चेमि ।"

नानाविभ्रमतः या यूनां भ्रमती यवसंस्तरे ।
अबलालोकनी कुन्दचतुर्थी सा प्रकीर्तिता ॥
पुष्पावचयकर्म स्याद् यूनां पुष्पावचायिका ।

उपवनेषु कामिमिथुनानां पुष्पावचयः पुष्पावचायिका ।

"विलम्बमानाकुलकेशपाशया कयाचिदाविष्कृतबाहुमूलया ।
तरुप्रसूनान्यपदिश्य सादरं (मनोधिना स्य ?) मनः समाददे ॥"

चरणाघातगण्डूषालिङ्गनाद्यैस्तु दोहदैः ।
कुसुमोत्पादिका कङ्केल्यादौ दौहदिका मता ॥

इत्यादि । (?) यत्र युवतयो वारुणीगण्डूषचरणप्रहारपरिरम्भविभ्रमेक्षणादिभिर्बकुलकङ्केलिकुरवकतिलकादीन् पुष्पयन्ति, सा दौहदिका ।

"चिणत्थणाएसुके सदाण्णं मुद्दीणणिवऽत्तुग्गासिहरग्गपडबस्सज्ज फळं तं तु एपम्म उत्तासि ऊढदूहं दोळवि आविआसि आसो अमिंदूदुवअणाए विहिणोणिप्फळकं केळकरणदोसो सुमुप्पिसिओ ।"

दोहळअमप्पणोकिण्णमग्गसै इत्यादि ।

**तरून् नवलतायुक्तान् भावयन्ति यथाङ्गनाः ।**
**क्रिया मनोज्ञा तु नवलतिकाख्या भवेत् तु सा ॥**

यत्र कस्ते प्रिय इति पृच्छाद्भिः पलाशादिनवलतादिभिः प्रियजनो हन्यते, सा नवलतिका ।

"णवळअपअरं अंगे जहिं जहिं महइ देवरो दाउं ।
रोमंचदण्डराई तहिं तहिं दीसइ वहूए ॥"

"भणतेणइरणवत्तु आए दिण्णे वहरोइदी एत्थणपट्टे ।
गामतरुणिए अज्ज वि दिअहं बहुमाणिआ भमइ ॥"

"इवणदळअपहजजद्धदाणतक्कअं किंविहळिअसुह्णए ।
अज्जज्जविंदुवइजणो घरे घरे सिक्खउम्महइ ॥"

**इन्द्रोत्सवस्य दिवसः शक्रार्चेति प्रकीर्त्यते ।**

"सच्चं चिअकट्ठमओ सुरणाओ जेण हाळिअधीआए ।
हत्थेहिं कमळदळकोमळेहिं चित्तोण पळ्ळविओ ॥"

**जलावगाहो ग्रीष्मादौ जलक्रीडेति कथ्यते ॥**

ग्रीष्मादौ जलाशयावगाहनं तोयक्रीडा ।

"पिसुणत्ति कामिणीणं जळलुक्कपिअवऊहणसुहेल्लिं ।
कंटइअकवोळोळं मउळत्तच्छाइ वअणाइं ॥"

**यत् प्रियावेक्षणं रागात् स्वतो व्याजेन वा भवेत् ।**
**तत् प्रेक्ष्यदर्शनं चित्तचमत्कार्यभिधीयते ॥**

प्रेक्ष्यदर्शनम् ।

"णच्चिहिइ णडो पेच्चिहिइ जणवओ होइ ओविदूसिहिइ ।
जइ रंगावे उदणअरी गहवइ धूआ णपेच्चिहिह ॥"

यद्वा,

"तत्र काञ्चनशिलातलाश्रयो
नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां
व्याजहार सहधर्मचारिणीम् ॥"

इत्यादि प्रकरणम् । यद्वा,

"दर्पणे च परिभोगदर्शिनी
पृष्ठतः प्रणयिनो निषेदुषः ।
प्रेत्य बिम्बमनुबिम्बमात्मनः
कानि कान्यपि चकार लज्जया ॥"

"तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिभिन्नरागम् ।
अपश्यतामप्सरसां मुहूर्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥"

**मदाय मदिरापानं मधुपानं तदुच्यते ।**

माध्वीकादिसेवा मधुपानम् । यथा —

"ओआरूढमहुमआखणप्पम्मुद्धावराहदिण्णुल्लावा ।
हसिऊण सच्चविज्जइ पिएण सल्लविअ लज्जिआ कावि वहू ॥"

**महाचतुर्थ्यां कामिन्या दभिन्याया कलिता भवेत् ।**
**उदीयमानानाक्रीडा प्रयोज्याः सम्प्रदायतः ॥ (?)**

अत्र वयोवस्थानुरूपाणि गोळक्रीडागूढाभिव्याहारघुटीप्रवर्तनपट्टिकायष्टिकालेखनमुष्टिक्षुल्लकद्यूतमध्यमाङ्गुलिग्रहणाक्षपरिवर्तनषट्पाषाणकल्लूरन्धिकागोधूमपुञ्जकालवणवीथिकानिलताडितिकावस्त्रग्रन्थिकासौभानिकामण्डलिन्यादीनि देश्यान्यन्यान्यपि निवेशयेयुः ।

कुट्टिमादौ पतितोत्पतितसूत्रमयकन्दुकास्फालनादिभिर्गोलक्रीडा ।

यथा —

"आवणइ परिअत्तिद अडेवेणं दीडताडिअ पयोहरंबुरुहं
असमं जसवाळउब्बुणवळणक्कणव्वहावळअंजं

रमणि रणक्कारं चारचारुसंचाररहसरमणं जरअ वळए
विसउब्बळ्ळसिचअदरविवडोरुजुअक्खणगहिअसह
अणंसुअपळ्ळवमरिपट्टसिज्जिरणिन्धाळं ककणअताटं
ककाटिपरिहिट्टि अकवोळंइ असुंदरीण सोहइकदूदुअ
कीळा शो..............................''

साङ्केतिकोक्तिर्गूढाभिव्याहारः । यथा —

"ताम्रपर्णीतटेष्वासीत् तस्य सैन्यं मृगीदृशाम् ।
द्यूतं मौक्तिकपुञ्जेषु विद्रुमाङ्कुरगोपनैः ॥

एवं यथालोकमन्यान्यपि प्रयोगेष्वनुसन्धेयानि ।

अथ समयस्य प्राबल्यमाह —

अत्यन्तं रक्षणीयं स्यादौचित्यं काव्यजीवितम् ।

तदेव द्रढयति —

षट्प्रमाणविरोधेऽपि समयं नातिलङ्घयेत् ।
समयेनाविरुद्धानि प्रमाणानि न लङ्घयेत् ॥

तथापि —

प्रमाणषट्कमप्युक्तमर्थालङ्काररूपतः ।

इति । प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावाः प्रमाणानि ।

तत्र प्रत्यक्षज्ञानं यथा —

"क्रान्तकान्तवदनप्रतिबिम्बे
भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते
निर्ववार मधुनीन्द्रियवर्गः ॥"

लिङ्गाद् यल्लिङ्गिनो ज्ञानं, तदनुमानम् । यथा—

"सानुज्ञमागमिष्यन् नूनं पतितोऽसि पादयोस्तस्याः ।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम् ॥"

सदृशात् सदृशज्ञानं यथा —

"तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
समूहस्तारकाणां (यत्कटाक्षा ? यः शकटा)कारमाश्रितः ॥"

यदाप्तवचनं, स शब्दः । यथा —

"कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥
गाथामेतामवष्टभ्य स्त्रीरत्नं दुष्कुलादपि ।
त्वया पाणौ कृता वीर! सीरिणीह कुटुम्बिनी ॥"

**प्रत्यक्षादिप्रतीतार्थो योऽन्यथा नोपपद्यते ।**
**अर्थान्तरं च गमयत्यर्थापत्तिं वदन्ति ताम् ॥**

"निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि! ।
अन्यथानुपपत्त्यैव पयोधरभरस्थितेः ॥"

अभावोऽपि प्रमाणाभावः । यथा — "सग्गं अपारिजाअं —" इत्यादि ।

**उत्पत्तिविधिसाहाय्यदानभे(देनो ? दो)पपादने ।**
**द्वैतीयानि प्रमाणानि शब्दान्तरमुखानि षट् ॥**
**विनियोगविधीष्टानि तादर्थ्यप्रतिपादने ।**
**तार्तीयानि प्रमाणानि श्रुतिलिङ्गमुखानि च ॥**
**प्रयोगविध्यपेक्षाणि क्रमस्य प्रतिपादने ।**
**पञ्चमोक्तप्रमाणानि श्रुत्यर्थप्रभृतीनि च ॥**
**शाब्दान्येतानि मानानि प्रतिस्थानं न च त्यजेत् ।**

उत्पत्तिविध्यपेक्षितरूपभेदप्रतिपादकानि षट् प्रमाणानि शब्दान्तराभ्याससंज्ञासंख्यागुणप्रकरणानीति । स्वरूपपरो हि विधिर्भिनत्ति तत् । तत्र शब्दान्तरभेदो यथा —

"संदीक्षीराणणेहेवहि आणच्छेत्तमिहकळमशोपि
चोक्कस्वरं हि अणं च पळइ पअम्मि ।" (?)

अभ्यासाद् यथा— "अद्दंसणेण पेम्मं अवेइ —" इत्यादि । संज्ञातो यथा— "मैथिलीमुदवहद् रघूत्तमः —" इत्यादि । संख्यातो यथा — "द्वयं मतं सम्प्रति शोचनीयताम् —" इत्यादि । यद्वा—

"रक्तपाटलसमानसौरभमस्य पातुमभवत् प्रियं द्वयम् ।
मादनं च मधुमत्तषट्पदं पेशलं च विमलं प्रियामुखम् ॥"

गुणाद् यथा — "पाण्ड्योऽयमंसार्पितलम्बहार —" इत्यादि । प्रकरणाद् यथा — "शशिनमुपगतेयं कौमुदी —" ।

एवमेतद्भेदकं प्रमाणषट्कम् । परस्परविवेकहेतुर्भेदः । स तु क्रियार्थोप-(पद)भेदात् कारकभेदाद् वा भवति । नात्र तनीयानपि विशेषः । येषां न कार्येऽर्थे पदस्य प्रामाण्यं, तेषां मते षांमतान्तरादयः कर्मैव भिन्दन्तीति (?) सिद्धे च भेदे प्रधानाङ्गभावविवक्षा । तत्र विनियोगविध्यपेक्षितशेषभावप्रतिपादकानि श्रुतिलिङ्गादीनि षट्प्रमाणानि । श्रुतिर्लिङ्गं वाक्यं प्रकरणं स्थानं समाख्येति ।

परोपकारे भावो हि शेषः । स श्रुतौ यथा — "अनेन यूना सह पार्थिवेन —" इत्यादौ । अनेनेति तृतीयाश्रुत्या पार्थिवस्याङ्गभावः प्रतिपाद्यते । तृतीया हि षष्ठीवदप्रधाना । 'सहयुक्तेऽप्रधाने' (२-३-१९) इति स्मृतेः ।

लिङ्गतो यथा—

"असौ विद्याशाभिः शिशुरपि विनिर्गत्य भवना-
दिहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः ।
यदालोके स्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥"

अत्र सौभाग्यस्मृतिकाभिगामिकसमस्तवरगुणाभिधायिपदप्रायोलिङ्गाद-(सावित्र्यन्वाभिप्रायो लिङ्गाद ?)सावित्र्यन्वाभिप्रायनिवर्तने नियोगः । सर्वभावानां शक्तिर्लिङ्गम् । शक्तिर्नाम सामर्थ्यम् ।

वाक्यतो यथा — "कुलेन कान्त्या वय(सा) नवेन —" । अत्र आत्मकुलतुल्य किन्तु गुणेन संगच्छस्व त्वमिति वाक्यार्थदभिमुदितस्याभिप्रायनिवर्तनविधियोगः (?) । साकाङ्क्षासन्निधियोग्यार्थपदकदम्बकं वाक्यम् ।

प्रकरणतो यथा — "अध्यास्य चाम्भःपृषतोक्षितानि —" इत्यादि । अत्र कलापिनृत्तदर्शनं किमन्योपकारकम्, उतेन्दुमतीयौवनश्रीनिर्वेशोपकारकमिति सन्देहे प्रकरणादुत्तरः पक्षः । इदं हि "सम्भाव्य भर्तारममुं युवानम्" इत्यादिप्रकरणे पठ्यते । परमैकार्थपरवाक्यसमूहः प्रकरणम् ।

स्थानतो यथा — "असौ कुमारस्तमजोऽनुजातः —" इति । अत्र राज्यधुरोद्वहनादीनि सादृश्यात् पितृसन्निधौ श्रूयमाणस्य स्थानतस्तद्गौरवादभ्युपपत्तिः । समदेशः स्थानमिति ।

समाख्यातो यथा —

"सहदधण्णणो जतइ आकेसवेण गिरिधरणे ।
गुरुभाव पावडेन विअण्णज्जि अच्चंरदिं पट्ठा ॥"(?)

अत्र धन्येति समाख्याबलात् सदैव तस्मात् प्रियप्रसादपात्रत्व एव नियोगः । यौगिकं नाम समाख्या ।

एवमेतत् प्रधानविशेषभावाद् विनियोजकप्रमाणषट्कम् । एतेषां समवाये पूर्वं गरीयः । अत्रापि कर्मणः कारकस्य वा शेषभाव इति समानं पूर्वेण । अवगते च प्रधानाङ्गभावे क्रमापेक्षा । अत्र योगविध्यपेक्षितक्रमप्रतिपादकानि श्रुत्यर्था(दी)नि षट् प्रमाणानि । श्रुतिरर्थः पाठः स्थानं मुख्यं प्रवृत्तिरिति ।

पौर्वापर्येणानुष्ठानं क्रमः । स श्रौतो यथा — "सम्भाव्य भर्तारममुं युवानम् —" इति । अत्र सम्भाव्येति 'समानकर्तृकयोः पूर्वकाले (३-४-२१) क्त्वाश्रुतेः (श्रोत्र ? श्रौत)क्रमः ।

आर्थो यथा —

"रसं जण्णंत्तिम्पण्डंतिपंमहं पिप्पिअसहावेत्तित्ति ।
विरहेण दंमरिउ हेगुगुणातस्सबहुमग्गा ॥" (?)

अत्र पूर्वं पूर्वं मन्मथवृद्धिः । ततमीर्ष्या प्राङ्मरणाभावः । ततो विप्रियसहिष्णुत्वमिति । अर्थक्रमो यथा — अग्निहोत्रं जुहोति । यवागूं पचतीति । पाठक्रमो यथा — "अनेन कल्याणि ! करे गृहीते —" इति । अनेन पृथिवी सामान्या दक्षिणाशायाः साधर्म्याच्च पूर्वपतित्वं पश्चात् करग्रहणमित्यर्थप्राप्ते वां सामर्थ्य पूर्वकरग्रहणम् । ततः पतित्वमिति क्रमः (?) ।

स्थानक्रमो यथा —

"सातुग्धज्झणबाळअणिच्चंघरदारतोरणिणाओ ।
सूसरवंदणमालिणव्विदिअहं भिक्किलाहिच्चिरं अवारारं(?) ॥"

अत्र गृहद्वारतोरणानिषण्णणाकेन(?) वन्दनमालासन्निधेर्दिनेऽपि सा विशुष्यति कृशायते चेति क्रमः ।

मुख्यक्रमो यथा —

"वेविरसिण्णकरंगुळिपरिग्गहक्खलिअळेहिणीमग्गे ।
सोत्थिव्विअ ण समप्पइ पिअसहि ! ळेहंमि किं ळिहिमो ॥"

अत्र स्वस्तिकशब्दस्य माङ्गलिकत्वेन मुख्यत्वादाङ्निवेशः । ततोऽस्य हितस्थानप्रयोग इत्यादिक्रमः ।

प्रवृत्तिक्रमो यथा —

"पुढमं वामणविहिणा पच्चाइ कओ विअंभमाणेण ।
थणजुअळेण इमाए महुमहणे व्व वळिबन्धो ॥"

अत्र विक्रमप्रवृत्ताविव स्तनप्रवृत्तावपि प्राग् वामनः पश्चाद् बलिर्बद्ध इति क्रमः । सिद्धेषु भेदाङ्गाङ्गिभावक्रमेषु शब्दानामनेकार्थत्वेवशदाविद्यागवद्यौ नार्थानामनुष्ठेयत्वा । इति प्राप्तौ वा(?) तदर्थनिर्धारणापेक्षा तत्राधिकारविध्यपेक्षितानि समस्तानेकार्थशब्दसाधारणानि प्रकरणादीनि षट् प्रकरणप्रमाणानि — अर्थः प्रकरणं लिङ्गमौचित्यं देशः काल इति । निर्धारणं विभागतः पृथक्करणम् ।

तदर्थतो यथा —

"गतिर्वेणि च नागेन वपुरूरू च रम्भया ।
पाणी प्रवालैरोष्ठौ च तस्यास्तुल्यत्वमाययुः ॥"

प्रकरणाद् यथा —

"ळच्छीए कुवळअदुळुक्काजळहिमएविरमत्ति दिशी ।
जअशुबअंवरमाळेव्वरहिणमणिव्वइत्ती ॥"

लिङ्गतो यथा —

"कळहोउज्जळगौ असि आसुरअरारसुवुं बंति ।
अणिमिसच्चं विहंडजुवरं सुहुद्धणणा ॥" (?)

औचित्यतो यथा — "सा चूर्णगौरं रघुनन्दनस्य —" इत्यादि ।

देशतो यथा —

"अमरावत्यां हरिरि"ति ।

काले — "त्रेतायामर्जुनः ।"

इति । एवमेतद्विभागतोऽर्थविशेषनिर्धारकं प्रमाणषट्कम् । उक्तं च —

"अर्थात् प्रकरणाल्लिङ्गादौचित्याद् देशकालतः ।
शब्दार्थाः प्रविभज्यन्ते न शब्दादेव केवलात् ॥"

